ओङ्कारसदृशो मन्त्रो नास्तीत्यर्थः ।। १६२ ।।

**यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।**
**कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि ।। १६३ ।।**

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तैत्ति.उ.२.७) 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (८.३.४) 'उत्तमः पुरुषः' (भ.गी.१५.४) 'स तत्र पर्येति, जक्षन् क्रीडन् रममाण' (छां.उ.८.१२.३) इत्याद्याः श्रुतयोऽपि ज्ञेयाः ।। १६३ ।।

ग्रन्थमध्ये स्वेष्टदेवं प्रणमति -

**यदीयाङ्घ्र्यब्जसच्छायासंश्रिता मुक्तिगा जनाः ।**
**रमन्ते निर्भया नित्यं वन्दे तं हयकन्धरम् ।। १६४ ।।**

*।। इति श्रीश्रुतिसिद्धान्तसङ्ग्रहे वनमालिमिश्रविरचिते*
*सोपायमुक्तिवर्णनं नाम द्वितीयोऽध्यायः ।।*

## ।। अथ तृतीयोऽध्यायः ।।

### शिष्य उवाच

जीवेशयोः स्वरूपं परेशाराधनं च पृच्छति - **क इति** ।

**को जीवः कीदृशो वा स्यात्कथं तिष्ठति सर्वदा ।**
**को वेशः कीदृशो वा स्यात् किं तदाराधनं प्रभो ।। १ ।।**

कः किंस्वरूपः । कीदृशः किंधर्मको जीवः देहादितो भिन्नोऽभिन्नो वाऽणुर्महान् मध्यमपरिमाणः परेशादभिन्नो भिन्नो वेत्यादिः प्रश्नार्थः । कः किंस्वरूपः । कीदृशः किंधर्मकः परिमितगुणोऽपरिमितगुणो नित्यविग्रहोऽनित्यविग्रहो वेत्यादिः प्रश्नार्थः ।। १ ।।

**(जीवस्वरूपवर्णनम्)**

तत्राऽऽदौ देहादितो भिन्नतया जीवस्वरूपं निरूपयति - **अहमिति** ।

### गुरुरुवाच

**अहंप्रत्ययवेद्योऽयं भिन्नो देहद्वयात् सदा ।**
**सुखदुःखादिभोक्ता च जीवः सङ्गीयते बुधैः ।। २ ।।**

स्थूलसूक्ष्मदेहद्वयात् सदा भिन्नः । सुखादिभोगप्रकारस्तु प्रागभिहितः ।। २ ।।

**(देहातिरिक्त आत्मा)**

देहात्मभेदाऽनुभवमाह - **पितॄनिति** ।

**पितॄनन्वभवं बाल्ये यौवने योषितस्तथा ।**
**पुत्रादीनधुना वृद्धः स्वप्ने व्याघ्रशरीरकः ।**
**आसं योऽहमिदानीं चास्मि मनुष्यशरीरकः ।। ३ ।।**

बाल्याद्यवस्थाभेदभिन्नेऽपि देहे आत्मस्वरूपस्याऽनुगतस्यैकस्यैवानुभवात् स्वप्नादिस्थाऽननुगतदेहगताऽनुगताऽऽत्माऽनुभवाच्च आत्मनो देहाद् भेदसिद्धिः ।। ३ ।।

**उत्पन्नश्चेष्टते बालः स्तनपानादिकर्मणि ।**
**पशूनामपि तत्रास्ति हीष्टसाधनतामतिः ।। ४ ।।**

उत्पत्तिकाल एव स्तनपानादिकर्मणि चेष्टते प्रवर्त्ततेऽतस्तत्र तदानीं पशूनामपीष्टसाधनताधीरस्ति ।। ४ ।।

**प्रवृत्तौ हेतुता तस्याः साऽनुमारूपिणी भवेत् ।**
**तद्धेतुर्व्याप्तिधीर्न स्याद्विना देहान्तरस्मृतिम् ।। ५ ।।**

प्रवृत्तिहेतुरिष्टसाधनताऽनुमाऽनुमितिः । तस्या हेतुर्व्याप्तिधीर्देहान्तरस्मृतिं विना न सम्भवति ।। ५ ।।

देहान्तरस्मृतौ चाननुगतदेहेष्वनुगतात्मानुसन्धानात्तयोर्भेदसिद्धिरित्याशयेनाह - **अनुस्यूतमिति** ।

**अनुस्यूतं यथा सूत्रं मणिष्वेकं पृथक् ततः ।**
**नानादेहानुवृत्तोऽयं जीवस्ततो भवेत्पृथक् ।। ६ ।।**

यथाऽनेकमणिषु प्रोतं सूत्रमेकं तद्वन्नानादेहानुगत आत्मैकः ।। ६ ।।

**(इन्द्रियादिभ्योऽपि भिन्न आत्मा)**

प्राणेभ्य आत्मनो भेदमाह - **प्राणेष्विति** ।

**प्राणेषु चेष्टमानेषु सुप्तौ मोहे चितो लये ।**
**चैतन्यं दृश्यते नैव शरीरेन्द्रियसङ्ग्रहे ।। ७ ।।**

सुषुप्तौ मूर्च्छायां च प्राणेषु चेष्टमानेषु सत्सु चितो जीवस्य नाडीस्थभगवद्रूपे लये सति शरीरेन्द्रियादिसङ्घाते चैतन्यं न दृश्यतेऽतः प्राणेभ्यो

जीवो भिन्नः । अनयैव युक्त्या देहस्थरुधिरादिधातुभ्योऽपि भेदः सिद्धः ।। ७ ।।

**येन दृष्टं पुरा रूपं रसो गन्धादिकं पृथक् ।**
**तन्नाशेऽप्यहमद्राक्षं रूपं नेत्रेण तद्दिने ।। ८ ।।**

**चक्षुरादिभिदा जीवेऽनुभवेन प्रसाधिता ।**
**संस्काराद्याश्रयो जीवो भिन्नः सदेन्द्रियादितः ।। ९ ।।**

येन चक्षुरादिना पुरा रूपादिकमनुभूतं तस्य नाशेऽप्यन्धादीनां तद्दिने रूपमहमद्राक्षमिति स्मरणादिन्द्रियेभ्योऽप्यात्मा भिन्नः ।। ८ ।। ९ ।।

**करणं चित्तबुद्ध्याद्यं कर्त्तृता तस्य नोचिता ।**
**दृष्टः कर्त्तेतरो लोके कारकः करणादितः ।। १० ।।**

मनोबुद्धिचित्ताहङ्काराणां करणत्वात्ततोऽपि कर्ताऽऽत्मा भिन्नः । कर्तृकरणयोर्भेदस्योत्सर्गसिद्धत्वात् ।। १० ।।

**(लिङ्गदेहादप्यात्मा भिन्नः)**

**लिङ्गदेहात्सुसिद्धोऽपि भेदो रीत्याऽनया स्फुटम् ।**
**उक्ताभिन्नत्वतस्तस्य शास्त्रेणापि स साध्यते ।। ११ ।।**

तस्य लिङ्गदेहस्योक्तैरिन्द्रियमनोबुद्ध्यादिभिः सहाभिन्नत्वात् ततो भेदसिद्ध्यैव यद्यपि जीवे लिङ्गदेहाद्भेदः सिद्ध्यति । तथापि स लिङ्गदेहभेदः शास्त्रेणापि साध्यते ।। ११ ।।

तत्र मोक्षधर्मवाक्यमुदाहरति -

**महतः परमव्यक्तमव्यक्तात्परतोऽमृतम् ।**
**अमृतान्नापरं किञ्चित्सा काष्ठा सा परा गतिः ।। १२ ।।**

महान् महत्तत्वम् । परं सूक्ष्मम् । अव्यक्तं प्रधानम् । परं सूक्ष्मम् ।

परतः परं सार्वविभक्तिकस्तसिः । अमृतम् आत्मस्वरूपम् । अमृतात्परं सूक्ष्मं नास्ति । गम्यते प्राप्यत इति गतिः पूर्णानन्दात्मतत्वम् ।। १२ ।।

(अहमर्थस्यानात्मत्वे आत्मनाशप्रसङ्गः)

**अहंवेद्य आत्मैव सुषुप्त्यैतत्प्रवृत्तितः ।**
**विरोधः श्रुतिवाक्यैः स्यान्न प्रेमास्पदताऽन्यथा ।। १३ ।।**

अन्यथाऽहमर्थस्यानात्मत्वस्वीकारे 'माममृतं कृधि ज्योतिरहं विरजा विपाप्मा भूयासम्' (महानारायण) इति श्रुत्याऽहमर्थस्यामृतत्वमुक्तम् । तच्चानात्मनो न सम्भवति 'कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति 'स प्राणमसृजत' 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिश्रुत्या जगत्कारणेऽहन्त्वमुक्तम् । 'तदात्मानमेवावेदहं ब्रह्मास्मि' इत्यवधारणेन शुद्धात्मनोऽहन्त्वमुक्तम् ।

'मत्तः परतरं नान्यत् मत्तः सर्वं प्रवर्त्तते' । (भ.गी.७.७)

'अहमात्मा गुडाकेश' । (भ.गी.१०.२०)

'ते प्राप्नुवन्ति मामेव' । (भ.गी.११.४)

'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' । (भ.गी.८.५५)

'मामेकं शरणं व्रज' (भ.गी.१८.६६) इत्यादिस्मृत्याऽहमर्थस्य परब्रह्मत्वमुक्तम्' ।

[1]'ततोऽमुख्यवृत्त्या अहंपदवाच्यो जीवः । सुषुप्त्यर्थमहमर्थस्य प्रवृत्तिदर्शनात्तस्यात्मत्वसिद्धिः । किञ्चाहमर्थस्यानात्मत्वे त्वन्नये तस्य नाशापत्त्या बौद्धमतप्रवेशः । परमप्रेमास्पदाहमर्थनाशस्य तद्भिन्नब्रह्मशून्यादिनामकावस्थानस्य च युवयोस्तुल्यत्वात् । न ह्यहमर्थभिन्ने निरुपाधिप्रेमास्पदत्वं

१. इदं वाक्यं क कोशे नास्ति ।

क्काप्यनुभूयते । निरुपाधिप्रेमास्पद एवात्मा । स त्वहमर्थ एव । तन्नाशो बौद्धमत इव त्वन्मतेऽप्यस्ति।।१३।।

**(जाग्रत्यहमर्थाधिकरणकस्मृत्यनुपपत्तिः)**

बाधकान्तरमप्याह - **सुखमिति** ।

**सुखमस्वाप्समित्येवं स्मरणं च भवेत् क्वचित् ।**
**सुषुप्तौ मनसोऽभावात् कृतहानादिकं भवेत् ।। १४ ।।**

सुषुप्तावन्तःकरणस्य तन्मते नाशेन तद्धटिताहमर्थस्य तदानीमभावेन जाग्रत्यहमर्थाधिकरणकस्मृत्यनुपपत्तिः । अनुभवस्मरणयोः सामानाधिकरण्यनियमात् ।। १४ ।।

ननु गौरोऽहमित्यत्र देहनिष्ठगौरत्वस्याहमर्थ इवात्मनिष्ठप्रेमास्पदत्वादिकमहमर्थ आरोप्यतेऽतः सुप्तौ प्रवृत्त्याद्युपपत्तिस्तत्राऽऽह - **अहमिति** ।

**काश्यादिधीर्भवेद्गौणी कृष्णं वस्त्रमिति स्फुटम् ।**
**मम देह इति ज्ञानसत्वे नैकत्वधीर्भवेत् ।। १५ ।।**

अहं गौरोऽहं कृश इत्यादि क्काचित्कं ज्ञानं कर्दमलिप्ते वस्त्रे कृष्णमितिवदौपचारिकमेव । मम देह इत्यादिभेदज्ञाने विद्यमानेऽभेदारोपासम्भवात् । तथा च दृष्टान्तासिद्धिः । आरोप्यसर्पादिगतभीषणत्वादे रज्ज्वादाविवाहमर्थगतप्रेमास्पदत्वस्यैवात्मनि भानापत्तेः ।। १५ ।।

**ब्राह्मणोऽहं मनुष्योऽहमिति ज्ञानं प्रमैव नः ।**
**देहभेदयुतात्मैव ब्राह्मणादिर्भवेद्यतः ।। १६ ।।**

देहभेदेन देहविशेषेण युक्त आत्मा ब्राह्मणादिपदवाच्यः । देहनाशे तद्योगस्य पदप्रवृत्तिनिमित्तस्याभावान्नात्मनि ब्राह्मणादिपदवाच्यत्वम् ।

'ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ।

कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ।। (म.भा.)

इति स्मृत्या देहभिन्नस्यैव देहविशिष्टस्यात्मनो ब्राह्मणपदवाच्यत्वोक्तेः ।। १६ ।।

(जीवगतकर्तृत्वभोक्तृत्वे सत्ये एव)

कार्यानुकूलकृतिमत्त्वादिरूपकर्तृत्वमन्तःकरणोत्पन्नमप्यविद्यासहकृत-स्वामित्वादिसम्बन्धेन वास्तवं जीवे वर्त्तमानम् । तस्यैव सुखदुःखादिरूपफलदत्वमित्याशयेनाह - **वास्तवीति** ।

**वास्तवी कर्तृता तस्य स्याद्भोक्तृत्वं यतस्तथा ।**
**अन्यथा व्यर्थता हि स्याद्विधानप्रतिषेधयोः ।। १७ ।।**

यतः कर्तृता तस्य [1]वास्तवी, ततः तथा वास्तवमेव भोक्तृत्वं तस्य जीवस्य भवेत् । अन्यथा जीवस्य वास्तवकर्तृत्वाऽनङ्गीकारे विधिनिषेधशायोर्वैयर्थ्यं स्यात् । "कर्त्ता शास्त्रार्थवत्त्वात्" (ब्र.सू.२.३.३२) इति सूत्रेण विधिनिषेधशास्त्रयोरर्थवत्त्वान्यथानुपपत्त्या जीवस्य [2]कर्तृत्वं व्यवस्थापितम् ।। १७ ।।

(जीवनिष्ठकर्तृत्वस्य पारमार्थिकत्वे स्मृत्युदाहरणम्)

जीवस्य वास्तवकर्तृत्वे स्मृतिमुदाहरति -

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ।।**
**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।। १८ ।।**

यदनिषिद्धं लौकिकं वैदिकं वा कर्म करोषि तन्ममार्पणं कुरु । एवं कर्मणो मदर्पणे कृते स्वर्गनरकादिफलदैः कर्मबन्धनैः प्रवाहानादिभूतैर्मो-

---

१. वास्तवी, ततः इति क कोशे नास्ति । २. कर्तृत्वं इति क कोशे नास्ति ।

क्ष्यसे । न हि मिथ्याभूतकर्तृत्वस्य स्वार्पणं ततो मोक्षः फलमिति सर्वज्ञेन परमाप्तेन वक्तुं युक्तम् ।। १८ ।।

**(जीवनिष्ठं कर्तृत्वं नान्तःकरणोपाधिकम्)**

ननु जपाकुसुमनिष्ठलौहित्यं स्फटिक इवान्तःकरणनिष्ठकर्तृत्वं जीवे आरोप्यते तत्राह - **मोक्ष इति** ।

**मोक्षो यस्य भवेत्तस्यैव न्याय्या कर्तृता सताम् ।**
**यः कर्त्ता स भवेद्भोक्तेति प्रथा लोकशास्त्रयोः ।। १९ ।।**

अन्तःकरणनिष्ठकर्तृत्वादेरारोपो न शुक्तौ रूप्यस्येव निरुपाधिकः । तद्धेतोः सादृश्यज्ञानस्याभावात् । सादृश्यज्ञानस्य तत्र हेतुत्वानङ्गीकारेऽधिष्ठानधियोऽप्यहेतुत्वापत्तेः । उपाधिनिवृत्तिं विनाऽपि सकृद्ज्ञानमात्रेण निवृत्त्यापत्तेश्च । नापि सोपाधिकः । लौहित्यस्य स्फटिककुसुमयोरिव जीवान्तःकरणयोरुभयोर्युगपदुपलम्भापत्तेः ।। १९ ।।

**(जीवस्याकर्तृत्वबोधिका श्रुतिः स्वातन्त्र्यप्रतिषेधपरा)**

क्वचिज्जीवस्याकर्तृत्वोक्तिरस्वातन्त्र्याभिप्रायेणेत्याह - **अकर्तृत्वेति** ।

**अकर्तृत्वगिरस्तस्य स्युः स्वातन्त्र्यनिषेधिकाः ।**
**पराधीनतया कर्त्तुरप्यस्त्येव हि कर्तृता ।। २० ।।**

पराधीनप्रभौ अप्रभुरितिवत्पराधीनकर्त्तरि अकर्तृपदप्रयोगोपपत्तेः ।।२०।।

**यदि स्यात्पुरुषःकर्ता शक्तात्मा श्रेयसि ध्रुवम् ।**
**आरम्भास्तस्य सिद्ध्येयुर्न च जातु पराभवेत् ।। २१ ।।**

**यदीति** । शक्तात्मा स्वतन्त्रः सन् कर्ता स्यात्तर्हि तस्य सर्वे आरम्भाः सिद्ध्येयुः सफलाः स्युः । स पुमान् जातु कदाचिदपि कुतश्चिन्न पराभवेत् ।। २१ ।।

स्वातन्त्र्याभावेनाकर्तृत्वबोधकमोक्षधर्मवाक्यमुदाहरति -

**नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**स्वातन्त्र्यं वार्यते जीवे चेष्टामात्रेऽनया गिरा ।। २२ ।।**

एतदेव स्पष्टयति -

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।। २३ ।।**

**ब्रह्मणीति** । हरिरेवाऽन्तस्थः कर्म कारयति । नाऽहं स्वतन्त्रः कर्म कर्तेति ब्रह्मणि हरौ कर्माणि निधाय, हरेरेवेदं कर्म न मम, अनेन स एव प्रीयतामिति सङ्गत्यागेन पापेन कर्मरूपयाऽनाद्यविद्यया न लिप्यते।।२३।।

**(निवृत्ताविद्यस्य मुक्तौ स्वाभाविकमेव कर्तृत्वमाविर्भवति)**

पराधीनमपि जीवस्य कर्तृत्वं सार्वत्रिकमेव मुक्तावपि तस्य सत्त्वादित्याह - **विहारेति** ।

**विहारश्रवणान्मुक्तौ कर्तृत्वस्य हि सत्यता ।**
**कर्तृत्वं द्विविधं प्रोक्तं स्वरूपं बाह्यमेव च ।। २४ ।।**

'स तत्र पर्येति जक्षन् क्रीडन् रममाण' (छां.उ.८.४.१३) इति विहारश्रवणात् स्वरूपनिष्ठं कर्तृत्वं स्वाभाविकं प्रागविद्यावृतं मुक्तावाविर्भूतम् ।। २४ ।।

**(अन्तःकरणोत्पन्नतया बाह्यमित्युच्यमानं कृतिमत्त्वापरपर्यायरूपं कर्तृत्वमामुक्तेः जीवे सत्यमेव प्रतीयते)**

बाह्यमेवाह - **बाह्यमिति** ।

**बाह्यं स्यात्कृतिमत्त्वादि तच्चान्तःकरणोद्भवम् ।**
**स्वस्वामित्वादिसंबन्धैर्जीवे तिष्ठति वास्तवम् ।। २५ ।।**

अन्तःकरणोत्पन्नं कृतिमत्त्वरूपकर्तृत्वमविद्यासहकृतस्वामित्वादिसम्बन्धेन सत्यमेव जीवे वर्तते ।। २५ ।।

अविद्यासहकृतत्वस्य व्यावृत्तिमाह - **यद्यपीति** ।

**यद्यपीश्वर एवास्ति मुख्यं तत्स्वामिता सदा ।**
**तथाप्यत्र न सम्बन्धाधायिका ह्यज्ञता क्वचित् ।। २६ ।।**

तस्य दुःखादिसंसारस्य स्वामित्वं मुख्यं परमेश्वरेऽस्ति तत्सम्बन्धघटकाविद्याया अत्रेश्वरेऽभावात् नेश्वरे सम्बन्धः ।। २६ ।।

एतदेव स्पष्टयति - **साज्ञानेति** ।

**साज्ञाना स्वामिता हि स्यात् सम्बन्धो बाह्यतः कृतेः ।**
**आत्मरूपं हि कर्तृत्वं मुक्तावाविर्भवेन्नृणाम् ।। २७ ।।**

बाह्यतो बाह्याया । अज्ञानेन सह वर्तमाना साज्ञाना स्वामिता । स्वरूपभूतं कर्तृत्वं तु जीवस्य मुक्तावेवाविर्भवति ।। २७।।

**बन्धकाले क्वचित्प्रोक्तं तस्याकर्तृत्वचिन्तनम् ।**
**तत्स्वातन्त्र्यनिवृत्त्यर्थमभिमाननिवृत्तये ।। २८ ।।**

क्वचित्पुराणादौ स्वातन्त्र्यनिवृत्त्यर्थं तस्य जीवस्याकर्तृत्वचिन्तनमुक्तम् । तदपि देहगेहादावहं ममेत्यभिमाननिवृत्त्यर्थमुक्तम् ।। २८ ।।

**(केवलस्य जीवस्य कर्तृत्वमाभिमानिकम्)**

**सजीवानां हि पञ्चानां कर्तृत्वं प्राह माधवः ।**
**केवलस्यैव जीवस्य तन्न्यवारयदीश्वरः ।। २९ ।।**

जीवसहितानां पञ्चानां कर्तृत्वं विधाय केवलस्य जीवस्य कर्तृत्वं निषिद्धम् ।। २९ ।।

भगवद्वचनमुदाहरति - **पञ्चेति** ।

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ।। ३० ।।**
**(भ.गी.१८.१३)**

मे मत्तः पञ्चैतानि कारणानि निबोध शृणु सेश्वरसाङ्ख्ये कृतान्ते वेदान्ते कथितानि ।। ३० ।।

तान्येवाऽऽह - **अधिष्ठानमिति** ।

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ।। ३१ ।।**
**(भ.गी.१८.१४)**

अधिष्ठानमिन्द्रियाद्याश्रयो देहः। कर्ता जीवः । करणमिन्द्रियवृन्दम् । पृथग्विधं ज्ञानेन्द्रियकर्मेन्द्रियादिभेदेन नानाप्रकारम् । विविधा नानाप्रकाराः । पृथगसङ्कीर्णाश्चेष्टाः प्राणापानव्यानोदानसमानादयः। दैवम् । सर्वः परमेश्वरः । यथा चत्वारोऽन्ये क्रियायां हेतवस्तथा जीवोऽपि । न तु केवलो जीव एव कर्तेति भावः ।। ३१ ।।

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ।। ३२ ।।**

शरीरादिना न्याय्यं विहितं विपरीतमविहितं निषिद्धं च यत्कर्म प्रारभते तत्रोक्ताः पञ्चैव हेतवो, न केवलो जीव इत्यर्थः ।। ३२ ।।

केवलं स्वस्यैव कर्तृत्वाभिमानं निन्दति -

**तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ।। ३३ ।।**

**तत्रेति** । एवं पञ्चानामेव कारणत्वे सति आत्मानं स्वं केवलं कर्तारं

नोक्तहेत्वन्तरसहितं स गुरूपदेशेनाऽसंस्कृतबुद्धित्वात् दुर्मतिः । सम्यक् न पश्यति हेत्वन्तरं विहायात्मन एव कर्तृत्वं जानातीति भावः ।। ३३ ।।

**(भोगासाङ्कर्यात्प्रतिदेहमात्मा भिन्नः)**

जीवानां वास्तवं प्रतिदेहं भेदमाह - **प्रतीति** ।

**प्रतिदेहं स भिन्नः स्याद्भोगसाङ्कर्यवर्जनात् ।**
**भेदस्यौपाधिकत्वं हि श्रुतियुक्त्यादिबाधितम् ।। ३४ ।।**

सर्वदेहेषु जीवैक्ये स्वर्गनरकबन्धमोक्षगुरुशिष्यादिव्यवस्थाभङ्गः स्यात् । देहेन्द्रियान्तःकरणाद्युपाधिभेदेऽपि कायव्यूहैर्योगिनः सर्वदेहेषु भोगः सुप्रसिद्धः । "शारीरश्चोभयेऽपि हि भेदेनैनमधीयत" (ब्र.सू. १.२.२०) इति सूत्रेण शारीरो जीवोऽन्तर्यामी न भवति किन्तु ततो वस्तुतो भिन्नो हि यत उभये काण्वा माध्यन्दिनाश्चैनं शारीरमन्तर्यामिणः सकाशात् "यो विज्ञाने तिष्ठन् विज्ञानं यं न वेद य आत्मनि तिष्ठन्नात्मा यं न वेद" (बृ.उ.३.७.२२) इत्यादिना भेदेनैवाधीयत इत्यर्थकेन विरोधः । विज्ञानात्मशब्दौ जीववाचकौ ।। ३४ ।।

मोक्षहेतुगुर्वाद्युपदेशादेर्मिथ्यात्वे मोक्षोऽपि मिथ्या स्यादित्याह - **गुर्विति** ।

**गुरुशिष्यादिभावादि स्यात् स्वाप्नवन्मृषा तव ।**
**तदा मोक्षो भवेन्मिथ्या स्वाप्नमोक्षो यथा मृषा ।। ३५ ।।**

स्वाप्निकश्रवणमनननिदिध्यासनब्रह्मापरोक्षजन्यमुक्तिः यथा स्वाप्नी मिथ्या तथा मिथ्याभूतगुरुश्रवणमनननिदिध्यासनसाक्षात्कारहेतुकमोक्षोऽपि मिथ्या स्यात् । मोक्षस्य मिथ्यात्वाङ्गीकारे बौद्धमतप्रवेशः स्पष्ट एव ।। ३५ ।।

**(भेदः नोपाधितः)**

भेदस्यौपाधिकत्वे दोषमाह - **उपाधेरिति** ।

**उपाधेरेकदेशेन सम्बन्धे स्यात् सदेशता ।**
**कृत्स्नेनैव हि सम्बन्धे न स्याद्भेदकता क्वचित् ।। ३६ ।।**

उपाधेश्चैतन्यैकदेशसम्बन्धे चैतन्यस्य सदेशत्वं स्यात् । कृत्स्नचित्सम्बन्धे उपाधेर्भेदकता न स्यात् ।। ३६ ।।

आगमविरोधमाह - **अतीतेति** ।

**अतीतानां च हानं हि मोक्षस्य बोधिका श्रुतिः ।**
**व्यर्था स्याद्बन्धमोक्षादिव्यवस्थायाश्च भञ्जनम् ।। ३७ ।।**

"यथा यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" (म.ना.उ.३.१०.४) "नित्यो नित्यानां चेतनश्चेतनानाम्" (क.उ.अ.३, ब्रा.४, मं.१) इति श्रुतीनाम्

'बहवो ज्ञानतपसा पूता मद्भावमागताः' । (भ.गी.४.१०)
'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' । (भ.गी.१४.२)
'ये च मुक्ता भवन्तीह नरा भरतसत्तम ।
तेषां लक्षणमेतद्यच्छ्वेतद्वीपनिवासिनाम् ।
ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
विशन्ति विप्रप्रवराः साङ्ख्या भागवतैः सह' ।

इत्यादिस्मृतीनां बहूनां मुक्तिं वदन्तीनां वैयर्थ्यापत्तेः ।। ३७ ।।

**(उत्क्रान्तिगत्यागतिभ्यो जीवोऽणुः)**

जीवानामणुपरिमाणं निरूपयति - **सदिति** ।

**सच्चिदानन्दरूपास्ते परिमाणेन चाणवः ।**
**तदुत्क्रान्त्यादिवाक्यानामन्यथा स्याद्विरोधिता ।। ३८ ।।**

"अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं चापुण्यं च" (ब्र.सू.भा.उ.गौतमश्रुतिः-२.३.२०)

"वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ।"
(श्वे.उ.४.९)

इत्यादिश्रुतेः । "सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छति" (ब्र.सू.भा.उ.पौष्यायणश्रुतिः-२.३.२०) इत्यादि श्रुतिभिः

'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते' । (भ.गी.८.२५)

इत्यादिस्मृतिभिश्च गमनमुक्तम् । तच्च विभोर्न सम्भवति, मध्यमपरिमाणत्वे त्वनित्यत्वापत्तिरिति जीवस्याणुत्वसिद्धिः । न च गमनादिश्रुतिर्बुद्धिविषया । "नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति" (मु.उ.अ.१, खं.२, मं.१०) "ते अशुभमनुभूयावर्त्तन्त" (भाल्लवेय) इत्यादिश्रुतौ गतेः सुखदुःखाद्यनुभवरूपसंसारसामानाधिकरण्योक्तेः । न च दुःखानुभवरूपसंसारो बुद्धेः । मोक्षस्य चैतन्यधर्मत्वेन तत्रैव संसारौचित्यात् । अन्यथा बन्धमोक्षयोर्वैयधिकरण्यापत्तेः । "स एनान् ब्रह्म गमयति" (छां.उ.४.१५) इत्यादिश्रुतौ

'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' । (भ.गी.८.२४)

इत्यादिस्मृतौ च मुक्तिसामानाधिकरण्योक्तेश्च । "तेन प्रद्योतेनैष आत्मा निष्क्रामति" (बृ.उ.४.४.२) इत्यात्मनिष्ठत्वश्रुतेश्च । न च बुद्ध्युपाधिकमात्मनि गमनम् । "तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जद्याति" (बृ.उ.४.३.३५) इति

स्वाभाविकगत्याश्रयशकटदृष्टान्तोक्तेः । "मन उदक्रामन्मीलित इवाश्नन् पिबन्नास्तैव" (ऐत.उ.१.४.३.) इत्यादि श्रुतौ मनसः उत्क्रमणेऽप्यात्मनस्तदभावश्रवणाच्च । "तदा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यादिश्रुतौ नामरूपविमोक्षोत्तरमपि गतिश्रवणाच्च "परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा.उ.८.१२.६) "स तत्र पर्येति जक्षन् क्रीडन् रममाणः" (छां.उ.८.१२.६) इत्यादिश्रुतौ स्वरूपाविर्भावरूपपरममोक्षेऽपि गत्युक्तेश्च ।। ३८ ।।

**(अणुत्वेऽपि जीवस्य प्रकाशरूपेण देहव्याप्तिरस्ति)**

ननु जीवस्याणुत्वे युगपत्सर्वाङ्गगतदुःखाद्यनुभवो न स्यादित्याशङ्क्य तस्य देहैकदेशस्थत्वेऽपि तदीयज्ञानादिगुणस्य देहव्यापकत्वाद्युक्तो युगपत्सर्वाङ्गेषु दुःखानुभव इत्याह - **एकेति** ।

**एकदेशस्थदीपस्य प्रभा स्याद् व्यापिनी यथा ।**
**तथा जीवगुणव्याप्तिस्ततः सर्वाङ्गभोजनम् ।। ३९ ।।**

यथा गृहैकदेशस्थदीपस्य प्रभा गृहव्यापिनी तथा देहैकदेशस्थजीवस्य ज्ञानादिगुणो व्यापकस्ततो दुःखादिभोग इत्यर्थः ।। ३९ ।।

गुणिन एकदेशस्थत्वेऽपि गुणस्य व्याप्तिः सम्भवतीत्यत्र दृष्टान्तान्तरमाह - **यथेति** ।

**यथा चन्दनबिन्दुर्हि देहैकदेशसंस्थितः ।**
**विधत्ते शैत्यमङ्गेषु तथा जीवस्य भोजनम् ।। ४० ।।**

देहैकदेशपतितश्चन्दनबिन्दुः सर्वाङ्गेषु शैत्यं करोति यथा तथा देहैकदेशस्थस्य जीवस्य गुणो देहव्याप्तः ।। ४० ।।

**अवच्छेदकमङ्घ्र्यादि क्षेत्रं बुद्धिरुदीरिता ।**
**दुःखादीनां भवेद्वोक्ता स्वामितादितया नरः ।। ४१ ।।**

दुःखादीनामुत्पत्तौ हस्तपादादिकमवच्छेदकम् । जलूकावत्सङ्कोचविकासशीलमन्तःकरणं क्षेत्रम् । अविद्यासहकृतस्वामित्वादिसम्बन्धेन जीवगतदुःखादिकं जीवेनानुभूयते । यथा क्षेत्रे कुसूले च मम धनमहं धनीति क्षेत्रकुसूलाद्यवच्छेदेन स्वामित्वसम्बन्धेन पुरुषे वर्तते तथा सङ्कोचविकासशालिन्यन्तःकरणे हस्तपादाद्यवच्छेदेनोत्पन्नो दुःखाद्यनुभवः स्वामित्वादिसम्बन्धेन जीवे सूपपन्न एव ।। ४१ ।।

ननु देशान्तरीयस्य चैत्रभोगसाधनाङ्कुरादेश्चैत्रादृष्टजन्यत्वमावश्यकम् । कार्यं प्रत्यदृष्टस्य हेतुत्वात् । यदङ्कुरादिर्यदीयभोगहेतुः स तदीयादृष्टजन्य इति नियमात् । असन्निकृष्टस्याजनकत्वेन सम्बन्धो वाच्यः। आत्मनिष्ठादृष्टस्याङ्कुरादौ साक्षात् सम्बन्धासम्भवेनात्मद्वारकः स्वाश्रयसंयोगो वाच्यः । स चात्मनो व्यापकत्व एवोपपद्यते । अणोर्देशान्तरीयाङ्कुरादौ संयोगाभावादित्याशङ्कामपाकरोति - **श्रुत्याद्येनेति** ।

**(जीवस्याणुत्वेऽपि विप्रकृष्टपदार्थसम्बन्धः आनुभविकः)**

**श्रुत्याद्येन स्फुटं तेषामणुत्वं प्रतिपादितम् ।**
**तन्निष्ठादृष्टसम्बन्धो दूरस्थेनाङ्कुरादिना ।। ४२ ।।**

श्रुत्यादिना तेषां जीवानामणुत्वं स्फुटं प्रतिपादितम् । दूरस्थेनाङ्कुरादिना तस्य जीवनिष्ठादृष्टस्य सम्बन्धः कल्प्यते ।। ४२ ।।

विप्रकृष्टानामपि सम्बन्धमुदाहरति -

**यथा दूरस्थवाच्येन पदानां विषयेण च ।**
**ज्ञानेच्छाभावनादीनां सम्बन्धो जायते तथा ।। ४३ ।।**

**यथेति** । यथा वाच्यवाचकज्ञानज्ञेयेच्छेष्यमाणादीनां विप्रकृष्टानामपि सम्बन्धस्तथाऽदृष्टाङ्कुरयोः सम्बन्धः ।। ४३ ।।

(विभ्वात्मवादिमते भोगनियामकाभावोपपादनम्)

**आत्मद्वारकसम्बन्धो व्यापकत्वनये सदा ।**
**सर्वेषामात्मनामस्ति विद्यते न नियामकम् ।**
**एतस्यादृष्टजन्यं स्यादिदं नान्यस्य भुक्तये ।। ४४ ।।**

आत्मनो व्यापकत्वनये आत्मद्वारकसम्बन्धः सर्वेषामात्मनामदृष्टानामङ्कुरादौ सम्बन्धोऽस्ति । चैत्रभोगसाधनमेवेदं न मैत्रस्येति नियामकं न विद्यते । चैत्रादृष्टजन्यमिति चैत्रभोगसाधनं, न मैत्रादृष्टजन्यं न वा तद्भोगसाधनमिति नियामकं नास्तीत्यर्थः । किञ्च चैत्रभोगहेतुशब्दस्यापि चैत्रादृष्टजन्यत्वं वाच्यम् । तच्च विभुद्वयसंयोगासम्भवात्स्वाश्रयसंयोगादन्यः सम्बन्धस्तवाऽप्यावश्यकः ।। ४४ ।।

**सर्वगत्ववचो ह्येषां श्रूयते यत्क्वचित् स्फुटम् ।**
**तत्सर्वत्रैव कालादौ सर्वयोनिषु वै क्रमात् ।। ४५ ।।**

सर्वत्र काले सर्वासु योनिषु चाणूनामप्यात्मनां क्रमाद्गमनं ब्रूत इत्युत्तरेणाऽन्वयः ।। ४५ ।।

**गतिं ब्रूते सदैतेषां न तु व्यापकतामणोः ।**
**कायव्यूहोऽपि केषाञ्चित् तथा सामर्थ्यशालिनाम् ।। ४६ ।।**

अणोरणुत्वेनागमादिसिद्धस्य व्यापकतां न ब्रूते । सामर्थ्यविशेषवतां केषाञ्चिद्योगिनां कायव्यूह उपपद्यते । तदीयान्तःकरणस्य तावद्देहेषु वैपुल्यस्य अन्तःकरणभेदे तु तावदन्तःकरणस्वामित्वस्य तत्र सम्भवात् । अविद्यासहकृतस्वामित्वादिकमेव भोगनियामकः सम्बन्धः । स नानाऽन्तःकरणनिरूपितो योगिन्यस्तीति तत्त्वम् ।। ४६ ।।

**सामर्थ्यं विद्यते तेषामावृतं तदविद्यया ।**
**आविर्भूतं भवेद्विष्णोः प्रसादात्सुधियां क्वचित् ।। ४७ ।।**

तेषां तादृशसामर्थ्यमविद्ययाऽऽवृतं सर्वदैवाऽस्ति । तच्छ्रीहरेः प्रसादादाविर्भवतीत्यर्थः ।। ४७ ।।

अणोरपि युगपद्विप्रकृष्टानेकदेहगतसुखदुःखाद्यनुभवं प्रागुक्तं स्पष्टयति- **वैपुल्यमिति** ।

**वैपुल्यं प्राप्नुयाच्चित्तं तत् क्षेत्रं सुखदुःखयोः ।**
**तत्रोत्पन्नसुखादीनां सम्बन्धोऽस्ति हि चेतने ।। ४८ ।।**

यावन्तो देहास्तत्पर्याप्तमन्तःकरणं प्राप्नोति । तत्तदेहावच्छेदेनान्तःकरणे जातं दुःखादिकं स्वामित्वादिसम्बन्धेन जीवे विद्यमानं यावदविद्यं तेनानुभूयते । अन्तःकरणस्य प्रतिदेहं भेदेऽपि तावदन्तःकरणानामविद्यासहितस्वामित्वं योगिनोऽस्तीति तत्सम्बन्धेन सूपपन्नो भोगः ।। ४८ ।।

ननु जीव एव दुःखादि सम्भवतीत्यत आह - **न हीति** ।

**न ह्यस्माकं नये जीवः क्षेत्रं दुःखादितो भवेत् ।**
**स स्वाम्येव परं भोक्ता स्वामी स्याद्धनवान्यथा ।। ४९ ।।**

यतोऽस्माकमौपनिषदानामारम्भवादं समवायं चानङ्गीकुर्वतां प्रकृतिपरिणामवादिनां नये दुःखादितो दुःखादेः क्षेत्रं जीवो न भवति । किन्तु स्वाम्येव । स परं केवलं भोक्ता । यथा क्षेत्रोत्पन्नधनेन पुमान् धनवान् तद्वत् ।

'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते', (भ.गी.२.२५)

इत्याद्यागमेन जीवस्य निर्विकारत्वं सिद्धम् । तच्च परिणामित्वविरुद्धम् ।

जाग्रत्स्वप्नःसुषुप्तं च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ।।

इत्याद्यागमेन जाग्रदादीनामन्तःकरणोपादेयत्वोक्तेः ।। ४९ ।।

(जागरस्वरूपम्)

जागरावस्थामाह - **देहादीनिति** ।

**देहादीन् प्राप्य भुङ्क्ते ना शब्दादीन् विषयान् बुधः ।**
**पुण्यपापादिकर्माणि जागरे कुरुते तथा ।। ५० ।।**

देहेन्द्रियप्राणान्तःकरणानि प्राप्य ना पुमान् पुण्यपापफलं शब्दस्पर्शरूपरसगन्धादिकं भूङ्क्ते तथा तादृशानि पुण्यपापरूपाणि कर्माणि कुरुते ।। ५० ।।

(स्वप्नस्वरूपम्)

स्वाप्नावस्थामाह - **समनस्केति** ।

**समनस्केन्द्रियैः सूक्ष्मैः संयुक्तो रमते तथा ।**
**स्वप्ने वासनयोत्पन्नान् सङ्ग्रह्णन् विषयान् पुमान् ।। ५१ ।।**

मनोयुक्तसूक्ष्मेन्द्रियैर्वासनयोत्पन्नान् शब्दादीन् विषयानिष्टानिष्टान् गृह्णन् सन् तथा जाग्रद्वदेव रमते ।। ५१ ।।

**पुण्यपापाधिकारो न भोग एव हि केवलः ।**
**तदा नातः कृतब्रह्महननादेः फलं भजेत् ।। ५२ ।।**

तदा स्वाप्नावस्थायां पुण्यपापाधिकारो नास्त्येव । किन्तु प्राचीनकर्मफलभोग एव । नातस्तदानीं कृतपुण्यपापफलभोगः । केषाञ्चिद्रेतःस्खलननिमित्तकप्रायश्चित्तं तु वाचनिकम् ।। ५२ ।।

(स्वाप्नदृष्टार्थानां येषामबाधः तेषामेव सत्यत्वम्)

ननु स्वाप्नानां पदार्थानां मिथ्यात्वान्नार्थक्रियाकारित्वं तत्राह - **स्वाप्निकानामिति** ।

**स्वाप्निकानां न वस्तुनां सर्वेषां हि मृषात्मता ।**
**केषाञ्चित्स्यात्तदानीं चेद्येषामर्थविपर्ययः ।। ५३ ।।**

**स्वाप्निकानामिति**। स्वाप्नवस्तूनां सर्वेषां मिथ्यात्वं नास्त्येव । केषाञ्चित्तदानीं लब्धमन्त्रादीनां फलसंवादित्वात् । फलसंवादिनां सत्यत्वनियमात् । केषाञ्चिन्मिथ्यात्वं स्यात् येषामर्थस्य विपर्ययो बाधः । यथा स्वप्ने जागरणं स्वशिरश्छेदो हिमालयारोहण समुद्रतरणादिकं मिथ्याभूतमेव। स्वप्ने परेशेनोत्पादितान् गजरथतुरगादीन् सत्यानेव तादृशदेहेन्द्रियादिसाधनैः जीवोऽनुभवति । तत्रत्यदेहादिकं सत्यमेवादृष्टवशात्प्राप्यते । भोगावसाने च त्यज्यते । अतश्चक्षुषा रूपं पश्यामि श्रवणेन शब्दं शृणोमीति चाक्षुषाद्यनुभवः सूपपन्नः । साक्षिणो योग्यास्तेनैवानुभूयन्ते । स्वाप्नानां गजादीनामुपादानवासनाः सूक्ष्माः । ईश्वरेच्छयाऽभिव्यक्तानां तासां तदुपादेयानां च तद्ग्रहणयोग्येन्द्रियैर्ग्रहणमिति विवेकः ।। ५३ ।।

**(सुषुप्तिस्वरूपम्)**

सुषुप्त्यवस्थामाह - **भ्रमणेनेति** ।

**भ्रमणेन परिश्रान्तः सुप्तिं गच्छति निष्क्रियः ।**
**नाडीस्थाच्युतरूपेण प्राज्ञेनालिङ्गितः सुखम् ।। ५४ ।।**

जागरस्वप्नयोः परिभ्रमणेन श्रान्तो जीवः श्रमापनोदाय सुषुप्तिं प्राप्य तत्र नाडीस्थाच्युतस्य हरे रूपेण मूर्त्याऽऽलिङ्गितः सन् निष्क्रियः स्वरूपसुखमनुभवति । "यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियते । 'यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवाऽयं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" (बृ.उ.६.३.१९) इत्यादि श्रुतेः । बाह्यं रूपादिकम् आन्तरं दुःखादिकं स्वरूपसुखभिन्नं न किञ्चिद्वेदेत्यर्थः।।५४।।

ननु स्वरूपसुखस्याविद्यावृतत्वाद्वैषयिकसुखस्य तदानीं सामग्र्यभावात्किंसुखानुभवस्तदाह - **आविरिति** ।

**आविर्भूतं हरेर्योगादविद्याया विरामतः ।**
**स्वरूपेणैव गृह्णातीन्द्रियाणां वर्जनात्तदा ।। ५५ ।।**

हरेर्मूर्त्तेर्योगादविद्यायाः विरामतः तिरोभावे सत्याविर्भूतं स्वरूपसुखं स्वरूपेणैव गृह्णातीत्यर्थः । सुप्तौ स्वरूपसुखमेवानुभूयते । न तु विषयोत्थं "न बाह्यं किञ्चन वेद नान्तरम्" इति श्रुतेः। न च सौषुप्तिकानुभवस्य नित्यत्वात्तज्जन्यसंस्कारासम्भवेन कथं जागरे 'सुखमस्वाप्सम्' इति स्मृतिरिति वाच्यम् । विषयानुभवसम्बन्धनाशस्यैव संस्कारहेतुत्वात् ज्ञानस्वरूपसुखयोर्नित्यत्वेऽपि विषयताख्यतत्सम्बन्धप्रयोजकनाडीस्थभगवन्मूर्तिसम्बन्धस्य जागरादावभावाद्विषयतानाशसम्भवात् । न च स्वरूपानुभवस्यान्तःकरणासम्बद्धत्वात्कथं तत्र संस्कारस्मरणयोः सम्भवः? समवायस्यानङ्गीकारेण फलबलकल्प्यो हि स्वरूपानुभवसम्बन्धोबिम्बसहकृतस्वामित्वादिरूपोऽन्तःकरणेऽप्यस्ति । अत एवातीतसुखदुःखादीनां स्मृतिरपि सूपपन्नेति विवेकः ।। ५५ ।।

**(मूर्च्छास्वरूपम्)**

मूर्च्छामाह - **हरीति** ।

**हरिसंश्लेषराहित्यात्सुखलेशो न विद्यते ।**
**मूर्च्छायां दुःखसम्भूतिस्तन्मुखे न सुखं कियत् ।। ५६ ।।**

मूर्च्छायां हरिमूर्त्तिसंश्लेषराहित्यात्तस्या मुखे आरम्भे दुःखसम्भवः, न सुखं कियत्किञ्चिदपि ।। ५६ ।।

**(योगस्वरूपम्)**

योगावस्थामाह - **योग इति** ।

**योगः प्रोक्तो द्विधा तज्ज्ञैः पुरुषार्थस्य साधनम् ।**
**सम्प्रज्ञाताभिधो ह्येकोऽसम्प्रज्ञाताभिधोऽपरः ।। ५७ ।।**

सम्प्रज्ञातासम्प्रज्ञातभेदेन द्विधा पुरुषार्थचतुष्टयसाधनं तज्ज्ञानन्तीति तज्ज्ञाः शेषादयस्तैः ।। ५७ ।।

सम्प्रज्ञातसमाधि स्वरूपम् आह - **सम्प्रज्ञातेति** ।

**सम्प्रज्ञातसमाधौ हि चित्तादिर्विद्यते नृणाम् ।**
**तत्रानन्दस्य सम्भूतिर्जीवो भोक्ता भवेत् तदा ।। ५८ ।।**

ध्येयाकाराश्चित्तवृत्तयः । ताभिर्ध्येयं विषयीकरोति । जन्यसुखमप्यनुभवति । ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यत इति योगोक्तेः ।। ५८ ।।

**(असम्प्रज्ञातसमाधिस्वरूपम्)**

असम्प्रज्ञातसमाधिस्वरूपम् - **असंप्रज्ञातेति** ।

**असम्प्रज्ञातयोगे तु चित्तादिः प्रलयं व्रजेत् ।**
**आविर्भूतस्वरूपेण ज्ञानेनाऽनुभवेन्नरः ।। ५९ ।।**

**स्वयोग्याशेषधर्माढ्यं हरिं पूर्णसुखं स्वकम् ।**
**अविद्यायाश्च सङ्कोचान्नाशाद्वाऽत्यन्ततस्तदा ।। ६० ।।**

असम्प्रज्ञातसमाधौ चित्तादेर्लयो जायते । हरिप्रसादादाविर्भूतस्वरूपज्ञानेनैव स्वयोग्याशेषहरिनिष्ठा धर्मास्तैराढ्यं युक्तं हरिं स्वकं स्वीयं पूर्णसुखं चानुभवोदित्यन्वयः ।। ५९ ।।

नन्वविद्यावरणस्य सत्वात् कथं तथानुभवस्तत्राह- **अविद्याया इति**।

मुक्तियोग्यस्याविद्याया नाशोऽन्यादृशस्य सङ्कोचोऽतः स्वरूपानन्दा-

नुभवः सूपपन्नः ।। ६० ।।

उक्तार्थे स्मृतिमुदाहरति - **यत्रेति** ।

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ।**
**यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ।। ६१ ।।**

यत्रावस्थाविशेषेऽसम्प्रज्ञाते योगसेवया योगाभ्यासेन निरुद्धं सच्चित्तम् उपरमते लीयते । तत्र चित्तोपरमे सति आत्मना स्वरूपेणात्मानं स्वरूपानन्दं पश्यन्नपरोक्षीकुर्वन् तुष्यति ।। ६१ ।।

**(असम्प्रज्ञातसमाधौ न दुःखाभावमात्रम्)**

नन्वसम्प्रज्ञातसमाधौ न सुखोपलम्भः किन्तु दुःखाभाव एव । तस्यैव पुरुषार्थत्वादित्यत आह - **सुखमिति** ।

**सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ।। ६२ ।।**

आत्यन्तिकं निरतिशयं यत्तदाश्चर्यरूपं बुद्ध्याऽऽविर्भूतस्वरूपज्ञानेनैव ग्राह्यम् अतीन्द्रियं हरिप्रसादहीनचित्तागम्यं तत्प्रसादयुत एव पुमान् स्वरूपज्ञानेन वेत्त्यनुभवति । अयं यत्र स्थितोऽनेकान्तरायैस्तत्त्वतो न चलति । सुखमेव पुमर्थो, न तु दुःखाभावमात्रं तस्यात्मनाशेनापि सम्भवात् । बौद्धाभिमतमोक्षस्याऽपि पुमर्थत्वापत्तेश्च । "रसो वै सः रसं लब्ध्वाऽऽनन्दी भवति" (तै.उ.२.७) इति श्रुत्या रसपदार्थस्य सुखस्यावाप्त्युक्तेः ।। ६२ ।।

एतदेव स्पष्टयति - **यमिति** ।

**यं लब्ध्वा चाऽपरं लाभं मन्यते नाऽधिकं ततः ।**
**यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ।। ६३ ।।**

यं सुखविशेषं लब्ध्वा ततोऽधिकं पुरुषार्थं न मन्यते । यस्मिन् पूर्णानन्दे स्थित आप्लुतो गुरुणापि प्रारब्धदुःखेन ततो न विचाल्यते । यद्यपि योगिनां मतेऽसम्प्रज्ञातसमाधौ दुःखाभाव एव न सुखानुभवः । तन्मते आत्मनो ज्ञानानन्दरूपत्वाभावात् । तथाप्यौपनिषदैर्बादरायणीयैस्तन्मतस्य तदंशे उपेक्षणीयत्वात् "स तत्र पर्येति जक्षन् क्रीडन् रममाण" (छां.उ.८.१२.६) इति "विहारोपदेशात्" (ब्र.सू.२.३.३३) इति श्रुतिसूत्राभ्यां मोक्षेऽपि विहारोक्तेः, "योऽयं विज्ञानघनः" (सुबालोपनिषत्-१५.२) "विज्ञानमानन्दं ब्रह्म" (बृ.उ.५.९.२८) इत्यादि श्रुत्याऽऽत्मनां ज्ञानानन्दरूपत्वोक्तेः ईश्वरस्य ज्ञानानन्दरूपत्वोक्त्यैव तत्सदृशजीवस्यापि तत्सिद्धेः । अत्र सम्प्रज्ञातसमाधौ चित्तवृत्तिभिर्ध्येयरूपं स्वस्वरूपं च विषयीकरोति । तदतिरिक्तविषयकाणां योगविरुद्धानां वृत्तीनामेव निरोधः । 'योगश्चित्तवृत्तिनिरोधः' (पा.यो.१.२.) इति सूत्रं योगविरोधिचित्तवृत्तिनिरोध इति व्याख्येयम् । असम्प्रज्ञातसमाधौ तु चित्तवृत्तिमात्रस्य लयः । सूत्रं वृत्तिमात्राभावपरं मुख्यार्थमेव । आविर्भूतस्वरूपज्ञानेन ध्येयं परेशं स्वरूपानन्दं चानुभवतीति तत्त्वम् ।। ६३ ।।

**स्थूलदेहादिकं हेतुः सर्वत्राऽमुक्तिगे सुखे ।**
**न चातः प्रलये भोगो जीवानां जायते क्वचित् ।। ६४ ।।**

मुक्तिव्यतिरिक्तकाले जीवसुखाद्यनुभवं प्रति स्थूलदेहेन्द्रियादिकं हेतुरतः प्रलये क्वचित् किमपि सुखादिकं नानुभूयते । मुक्तौ तु स्वरूपेणैवानन्दमनुभवतीति तत्त्वम् ।। ६४ ।।

जीवपदार्थमाह - **अल्पेति ।**

**अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यं सदैव हि ।**
**एतज्जीवत्वमीशत्वं विपरीतमितो मतम् ।। ६५ ।।**

इतो जीवलक्षणाद्विपरीतं पूर्णानन्तशक्तिमत्त्वादिरूपम् ।। ६५ ।।

अध्यायान्ते स्वेष्टदेवं नमस्करोति -

**यस्याविद्याख्यशक्त्या हि पूर्णानन्दावृतिश्चिताम् ।**
**सर्ववस्तुनियन्तारं वन्दे श्रीहयकन्धरम् ।। ६६ ।।**

यस्येति । चितां जीवानाम् ।

*।। इति श्रीवनमालिमिश्रविरचिते श्रुतिसिद्धान्तसङ्ग्रहे*
*जीवस्वरूपवर्णनं नाम तृतीयोऽध्यायः ।।*

# ।। अथ चतुर्थोऽध्यायः ।।

### (जन्मादिकारणत्वं हरेरसाधारणलक्षणम्)

### गुरुरुवाच

अलौकिकस्य वस्तुनो लक्षणं विना ज्ञानं न सम्भवतीत्यसाधारणलक्षणपूर्वकं स्वेष्टदेवं स्मरति - **यत इति** ।

**यतो भूतानि जायन्ते येन जीवन्ति सर्वदा ।**
**लीयन्ते यत्र सर्वाणि हयग्रीवोऽस्तु मे गतिः ।। १ ।।**

"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व तद् ब्रह्म" (तै.उ.३.१) इति श्रुत्या विश्वोदयादिकर्तृत्वमेवासाधारणं लक्षणमुक्तम् ।। १ ।।

### (स्वाधीनप्रकृत्यादिभिः सृष्ट्यादि लीलया)

ननु विश्वसृष्टौ कालादृष्टप्रकृत्यादेरपि हेतुत्वात्कथमीशस्यैव तदसाधारणलक्षणमत आह - **स्वाधीनेति** ।

**स्वाधीनसत्तं समुपेत्य कालं जीवान् प्रधानं घटयन् स्वतन्त्रः ।**
**विश्वोदयादीनि करोति तथ्यं सत्यैरनन्तैर्हि गुणैरुपेतः ।। २ ।।**

यथा स्वयं गन्तुं समर्थोऽपि लीलया यष्टिमाददानो न सामर्थ्यहीनो भवति तथा सकलनिरपेक्षतया जगत्सर्जनादौ शक्तोऽपि लीलयैव स्वाधीनसत्ताककालादृष्टप्रकृत्यादिकमाददानो नासमर्थो भवति। घटयन् प्रेरयन् । तथ्यं यथा स्यात् तथा करोति । न त्वैन्द्रजालिकवन्मिथ्यावस्तु प्रदर्श्य प्रतारयति । सत्यैस्त्रिकालाबाधितदोषासहकृतैरुपेतो यतः स्वतन्त्रः लोके यः स्वतन्त्रः । समर्थः प्रेक्षावान् स स्वेष्टसर्वोपेतो भवति ।। २ ।।

उक्तार्थे वैष्णवमुदाहरति - **प्रकृतिमिति** ।

**प्रकृतिं पुरुषं चापि प्रविश्यात्मेच्छया हरिः ।**
**क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाऽव्ययौ ।। ३ ।।**

व्यया सविकारा प्रकृतिरव्ययो निर्विकारो जीवस्तौ अन्तर्यामितया प्रविश्य क्षोभयामास परस्परं संयोज्य कार्योन्मुखौ कृतवानित्यर्थः ।

यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ।। (भ.गी.१३.२७)

इति स्मृत्या विश्वसृष्टौ जीवप्रकृतिसंयोगस्य हेतुत्वोक्तेः ।। ३ ।।

नन्वीश्वरेच्छादीनामपि नित्यत्वात्सदा सृष्ट्याद्यापत्तिरित्याशङ्क्य वैष्णवेन परिहरति - **द्विपरार्द्धेति** ।

**द्विपरार्द्धात्मकः कालः कथितो हि मया तव ।**
**तदहस्तस्य मैत्रेय विष्णोरीशस्य कथ्यते ।। ४ ।।**

अहर्दिनम् ।। ४ ।।

**व्यक्ते च प्रकृतौ लीने प्रकृत्यां पुरुषे तथा ।**
**तत्र स्थिते निशा चान्या तत्प्रमाणा महामुने ।। ५ ।।**

व्यक्ते महदादिस्थूले प्रकृतौ प्रधाने । पुरुषे हरौ प्रकृतौ लीनायां सत्यां तत्र स्थिते काले दिवसादन्या तत्प्रमाणा द्विपरार्द्धात्मिका विष्णोर्निशा ।। ५ ।।

**(स्वत एव काले विशेषाङ्गीकृतेः सृष्टिकाल एव नित्याया इच्छायाः व्यक्तिः)**

ननु विष्णोरप्यहोरात्रादिनाऽऽयुःपरिच्छेदः स्यात्तत्राह - **नैवेति** ।

**नैवाहस्तस्य मैत्रेय न निशा परमात्मनः ।**
**उपचारस्तथाऽप्येष तस्य परं द्विजोच्यते ।। ६ ।।**

तस्याचिन्त्यशक्तेः परमस्वतन्त्रस्याहोरात्रादि वा नास्ति । परं चतुर्मु-

खायुस्तदभावयोस्तदहोरात्रादिकमुपचर्यते । एकैवेच्छा सृष्टिकालयुक्ता सिसृक्षा प्रलयकालयुक्ता च जिहीर्षा भवति । "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" (ब्र.सू.२.१.३५) इति सूत्रेण "पुण्येन पुण्यं लोकं नयति पापेन पापम्" (षट्प्र.उ.३.७) इति श्रुत्या च विषमसृष्टिनिमित्तकवैषम्य-दोषनिरासाय जीवादृष्टापेक्षाया ईश्वरस्योक्तत्वात् । न च "स एव साधु कर्म कारयति" (कौ.उ.३.८) इत्यादिश्रुत्या विषमकर्मकारयितृत्वं तस्यै-वोक्तमिति वैषम्यतादवस्थ्यमिति वाच्यम् । पूर्वपूर्वकर्मापेक्षयोत्तरोत्तरक-र्मकारयितृत्वादवैषम्योपपत्तेः । कर्मणां च प्रवाहानादित्वात् । न च स्वातन्त्र्यहानिः । लीलयाऽदृष्टाद्यङ्गीकारेऽपि स्वातन्त्र्योपपत्तेः ।। ६ ।।

**(हरिरेव सृष्ट्यादिकर्ता सर्वनामा च)**

ननु चतुर्मुखः स्रष्टा रुद्रश्च नाशकः कथमेक एव हरिस्त्रयाणां कर्त्तेति तत्राह - **सदेति** ।

**सदोपगीतो निगमैश्च सर्वैरचिन्त्यशक्तिर्गुणसागरोऽसौ ।**
**सदोज्झितावद्य उदारकीर्तिः श्रियः पतिर्विश्वसृजां हि कर्ता । ७**

असौ हरिः "नारायण एक एवाग्र आसीन्न ब्रह्मा न च शङ्करः" "यो ब्रह्माणं विदधाति" (श्वेताश्वतर.६.८) "यस्य त्र्यक्षः शूलपाणि-रजायत" इत्यादिनिगमैः । हि प्रसिद्धम् । चतुर्मुखादिकर्तृत्वेनोपगीतो, न तु कस्मिंश्चित्कल्पे हरिर्जगत्कर्त्ता कस्मिंश्चिच्चतुर्मुखादिरिति पर्यायेण । च पुनः सर्वैर्निगमैरुपगीतो वाच्य इति । यतो गुणसागरः सर्वशब्दप्रवृत्तिनि-मित्तधर्मवानतः सर्वशब्दवाच्यः । "सर्वे वेदा यत्पदमामनन्ति" (क.उ. २.१५) "नामानि सर्वाणि यमाविशन्ति" (ब्र.सू.भा.उ. भाल्लवेय.श्रु. १.१.१) इत्यादिश्रुतेः

वेदैश्च सर्वैरहमेव वेद्यः । (भ.गी.१५.१५)

इत्यादिस्मृतेश्च ।

नन्वेकस्य कथं विचित्रसृष्टिकर्तृत्वं तत्राह अचिन्त्यशक्तिरिति । "अचिन्त्यशक्तिः पुरुषः" इत्यादिश्रुतेः "आत्मनि चैवं विचित्राश्च हि" (ब्र.सू.२.१.२९) इति सूत्राच्च । ननु विश्वकर्तृत्वे परिश्रमादिदोषः स्यात्तत्राह - सदोज्झितावद्य इति । अवद्यैः दोषैः सदोज्झितोऽस्पृष्टः । जगत्स्रष्टृत्वं चानन्दोद्रेकाल्लीलयैव । "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" (तै.उ.२.७) इत्यादिश्रुतेः । आकाशः परमात्मा यद्यद्रिक्तानन्दो न स्यात् तदा विश्वप्राणनादिकं कः कुर्यादित्यर्थः । उदारा वदान्या कीर्त्तिर्यस्य । अतः श्रियः पतिः । कीर्तिमन्तमेव हि सा वृणुते । ननु मरीच्यादीनां स्रष्टा ब्रह्मा प्रसिद्ध इति कथं सर्वस्रष्टा हरिस्तत्राह विश्वसृजामिति । तत्रापि चतुर्मुखाद्यन्तर्गतः कार्यमात्रं प्रति मुख्यः कर्ता ।। ७ ।।

चतुर्मुखादिरूपेण हरिरेव सर्गादिकर्त्तेत्याह - **प्रजा इति** ।

**प्रजाः ससर्ज भगवान् ब्रह्मा नारायणात्मकः ।**
**नारायणः परोऽचिन्त्यः परेषामपि स प्रभुः ।। ८ ।।**

नारायण आत्माऽन्तर्यामी यस्य ।। ८ ।।

**(ब्रह्मणि शिवे च तत्तन्नामरूपो हरिः स्थित्वा सृष्ट्यादि करोति)**

ब्रह्माऽन्तर्यामी हरिर्ब्रह्मेत्याह - **ब्रह्मेति** ।

**ब्रह्मस्वरूपी भगवाननादिः सर्वसम्भवः ।**
**सर्गस्थितिविनाशांस्तु भगवान् मधुसूदनः ।।**
**तैस्तैरूपैरचिन्त्यात्मा करोत्यव्याहतान् विभुः ।। ९ ।।**

**जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः ।**
**ब्रह्मा भूत्वाऽस्य जगतो विसृष्टौ सम्प्रवर्तते ।। १० ।।**

**सृष्टं च पात्यनुयुगं यावत् कल्पविकल्पना ।**
**सत्त्वभुग्भगवान् विष्णुरप्रमेयपराक्रमः ।। ११ ।।**

**तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः ।**
**मैत्रेयाखिलभूतानि भक्षयत्यतिभीषणः ।। १२ ।।**

रुद्ररूपी रुद्रान्तर्यामी ।। १२ ।।

भारतमुदाहरति - **बुद्धिरिति** ।

**बुद्धिर्मनोमहद्वायुस्तेजोऽम्भः खं मही च या ।**
**चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ।। १३ ।।**

**चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः ।**
**प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिर ।। १४ ।।**

**(हरिरेव सर्वदेवोत्तमः इत्यत्र भारतसम्मतिकथनम्)**

ननु रुद्रादेरपि क्वचित्पुराणादौ जगत्कर्तृत्वमुक्तमिति तस्यापीशत्वं स्यादिति चेत् यत्र सामान्यतः प्रश्नो विशेषेणोत्तरं तत्रैव सर्वेश्वरत्वनिर्णयः । क्वाचित्कं पौराणिकवाक्यं शिवादिस्तावकमित्याशयेन सामान्यप्रश्नविशेषोत्तराभ्यां हरेः सर्वोत्तमत्वं प्रतिपादयन् महाभारतमुदाहरति - **गृहस्थ इति** ।

**गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।**
**य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ।। १५ ।।**

**कुतो ह्यस्य ध्रुवः स्वर्गः कुतो निःश्रेयसं परम् ।**
**विधिना केन जुहुयाद्दैवं पित्र्यं तथैव च ।। १६ ।।**

यजेत उपासीत[1] ।। १५ ।। १६ ।।

---

१. यजेत उपासीत इति ख कोशे नास्ति ।

**मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः ।**
**स्वर्गतश्चैव किं कुर्यात् येन [1]न च्यवते दिवः ।। १७ ।।**

स्वः स्वर्गे गतः किं कुर्याद्येन ततो न पतेत् ।। १७ ।।

**दैवतानां च को देवः पितॄणां च पिता तथा ।**
**तस्मात्परतरं यच्च तन्मे ब्रूहि पितामह ।। १८ ।।**

युधिष्ठिरेण सामान्यतः सर्वेश्वरः पृष्टः ।। १८ ।।

नारायणीयाख्यानेन विशेषेण सर्वोत्तमतया हरिं निर्धारयति - **सिद्धा इति ।**

**सिद्धा ह्येते महाभागाः पुरा ह्येकान्तिनोऽभवन् ।**
**तमोरजोभिर्निर्मुक्ता मां प्रवेक्ष्यन्त्यसंशयम् ।। १९ ।।**

भगवता मुक्तप्राप्यत्वं स्वस्योक्तम् ।। १९ ।।

**न दृश्यश्चक्षुषा योऽसौ न स्पृश्यः स्पर्शनेन च ।**
**न घ्रेयश्चैव गन्धेन रसेन च विवर्जितः ।। २० ।।**

हरेः सर्वेन्द्रियागम्यत्वेनौपनिषदत्वं द्योतितम् ।। २० ।।

**सत्त्वं रज स्तमश्चैव न गुणास्तं भजन्ति वै ।**
**यश्च सर्वगतः साक्षी लोकस्यात्मेति कथ्यते ।। २१ ।।**

प्राकृतगुणास्पृष्टत्वेन तस्य नैर्गुण्यं प्रतिपादितम् ।। २१ ।।

**पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते ।**
**यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः ।। २२ ।।**

ज्ञानैकगम्यत्वमुक्तप्राप्यत्वादिकमसाधारणमीश्वरलक्षणमुक्तम् ।। २२ ।।

---

१. च इति क पाठः

नाम्ना तं निर्दिशति - **स इति** ।

**स वासुदेवो विज्ञेयः परमात्मा सनातनः ।**
**न च जीवं विना ब्रह्मन् वायवश्चेष्टयन्त्युत ।। २३ ।।**

चेष्टकोऽन्तर्यामी । जीवयतीति जीवः सङ्कर्षणो हरिः ।। २३ ।।

**स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते ।**
**तस्मात्प्रसूतो यः कर्त्ता कारणं कार्यमेव च ।। २४ ।।**

परितः सम्यक् ख्यातः कथितः शेषो जगत्प्रलयेऽप्यविकृततयाऽवशिष्टः स सङ्कर्षण एव मनोनियामकः प्रद्युम्नरूपोऽवततार । तस्मात्प्रद्युम्नात्कार्यकारणनियामकोऽनिरुद्धरूपो हरिरवततार ।। २४ ।।

**तस्मात्सर्वं सम्भवति जगत्स्थावरजङ्गमम् ।**
**सोऽनिरुद्धः स ईशानो व्यक्तः सर्वेषु कर्मसु ।। २५ ।।**

तस्मादनिरुद्धरूपाद्धरेः सर्वकर्मस्वभिव्यक्तः प्रकटः ।। २५ ।।

अवतारावतारिणोरभेदमाह - **य इति** ।

**यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ।**
**ज्ञेयः स एव राजेन्द्र जीवः सङ्कर्षणः प्रभुः ।। २६ ।।**

**सङ्कर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते ।**
**प्रद्युम्नाद्योऽनिरुद्धः स ईश्वरः प्रभुरव्ययः ।। २७ ।।**

**ललाटाच्चैव मे रुद्रो देवः क्रोधाद्विनिःसृतः ।**
**मया सृष्टः पुरा ब्रह्मा मां यज्ञमयजत्स्वयम् ।। २८ ।।**

**ततस्तस्मै वरान् प्रीतो दद्यामहमनुत्तमान् ।**
**त्वत्कृतां च मर्यादां नातिक्रमिष्यति कश्चन ।। २९ ।।**

**त्वं चैव वरदो ब्रह्मन् वरेप्सूनां भविष्यसि ।**
**विविधानां च भूतानां त्वमुपास्यो भविष्यसि ।। ३० ।।**

**प्रादुर्भावं गतश्चाऽहं सुरकार्येषु नित्यदा ।**
**अनुशास्यस्त्वया ब्रह्मन्नियोज्यश्च सुतो यथा ।। ३१ ।।**

**एतांश्चान्यांश्च रुचिरान् ब्रह्मणेऽमिततेजसे ।**
**अहं दत्वा वरान् प्रीतो वै निवृत्तिपरोऽभवम् ।। ३२ ।।**

अनुशास्यः शिक्षणीयः । नियोज्यः प्रवर्त्तनीयः ।। २६ - ३२ ।।

**अस्मन्मूर्त्तिश्चतुर्थी या साऽसृजच्छेषमव्ययम् ।**
**स हि सङ्कर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् ।। ३३ ।।**

चतुर्थी वासुदेवाख्या ।। ३३ ।।

**प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ।**
**अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः ।। ३४ ।।**

हरेः सर्गः प्राच्यामिन्दुरिवाविर्भाव एव । नारदं प्रति स्वस्य सर्वोत्तमत्वं स्पष्टमुक्तम् ।। ३४ ।।

अनिरुद्धरूपाद्धरेर्विश्वसृष्टिमाह - **अनिरुद्ध इति** ।

**अनिरुद्ध इति प्रोक्तो लोकानां प्रभवाप्ययः ।**
**ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः ।। ३५ ।।**

**प्रसादात्प्रादुरभवत्पद्मं पद्मनिभेक्षणात् ।**
**ब्रह्मा समभवत्तस्मात्स तस्यैव प्रसादजः ।। ३६ ।।**

**अह्नः क्षये ललाटाच्च सुतो देवस्य वै तदा ।**
**क्रोधाविष्टस्य सञ्जज्ञे रुद्रः संहारकारकः ।। ३७ ।।**

**एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजावुभौ ।**
**तदादेशितपन्थानौ सृष्टिसंहारकारकौ ।**
**निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ ।। ३८ ।।**

एवं ब्रह्मरुद्रादिजनकत्वं हरेः स्पष्टमुक्तम् ।। ३५ - ३८ ।।

**(चतुर्मुखवचनेनापि हरेस्सर्वोत्तमत्वप्रसाधनम्)**

तथा रुद्रं प्रति ब्रह्मोक्तिः -

**अहं प्रसादजस्तस्य कस्मिंश्चित्कारणान्तरे ।**
**त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातनः ।। ३९ ।।**

**मया च सार्द्धं वरदं विबुधैश्च महर्षिभिः ।**
**प्रसादयाशु लोकानां शान्तिर्भवतु मा चिरम् ।। ४० ।।**

**ब्रह्मणा त्वेवमुक्तस्तु रुद्रः क्रोधाग्निमुत्सृजन् ।**
**प्रसादयामास ततो देवं नारायणं प्रभुम् ।। ४१ ।।**

**अहो नारायणं तेजो दुर्दर्शं द्विजसत्तम ।**
**यत्राविशन्ति कल्पान्ते सर्वे ब्रह्मादयः सुराः ।। ४२ ।।**

कस्मिंश्चिन्निमित्ते हरिहरयोर्युद्धे प्रवृत्ते ब्रह्मणाऽऽगत्य हरेरैश्वर्यं रुद्राय बोधितम् । रुद्रस्तु तद्विज्ञाय क्रोधं विहाय हरिं प्रसादयामासेत्यर्थः ।। ३९ -४२ ।।

**(सात्त्विकानामेव हर्याराधने प्रवृत्तिः)**

सात्त्विकस्यैव हरेराराधने प्रवृत्तिर्नेतरस्येति प्रतिपादयितुमाह - **एव-मिति** ।

**एवं बहुविधं धर्मं प्रतिबुद्धैर्निषेवितम् ।**
**न कुर्वन्ति कथं विप्रा अन्ये नानाव्रतस्थिताः ।। ४३ ।।**

अवैष्णवेषु नानाव्रतेषु स्थिता वैष्णवेभ्योऽन्ये केचन विप्राः प्रतिबुद्धै-र्नारदादिभिर्निषेवितमपि वैष्णवं धर्मं न कुर्वन्ति कथमिति जनमेजयस्य प्रश्नः ।। ४३ ।।

उत्तरमाह वैशम्पायनः - **तिस्र इति** ।

**तिस्रः प्रकृतयो राजन् देहबन्धेषु निर्मिताः ।**
**सात्त्विकी राजसी चैव तामसी चैव भारत ।। ४४ ।।**

**देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह ।**
**सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षाय निश्चितः ।। ४५ ।।**

देहबन्धेषु देहसम्बन्धेषु यः सात्त्विकः पुरुषः स श्रेष्ठः मोक्षाय निश्चितो भवेत् ।। ४५ ।।

**अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमम् ।**
**नारांयणपरो मोक्षस्ततो वै सात्त्विकः स्मृतः ।। ४६ ।।**

पुरुषं सर्वान्तर्यामिणं ब्रह्मवित्तमं सर्वदाऽकुण्ठितस्वरूपज्ञानं हरिम् अत्र मर्त्यादिदेहेऽपि यः सर्वोत्तमतया प्रीतिपूर्वकं जानाति स सात्त्विकः स्मृतः । नारायणः परः प्राप्यो यत्र स तथा मोक्षः ।। ४६ ।।

नारायणपरायणस्यैव मोक्ष इत्युक्त्वा हरिमायामोहितानां हरौ भक्तिर्न भवतीत्याह - **इत्थमिति** ।

**इत्थं हि दुश्चरो धर्म एष पार्थिवसत्तम ।**
**यथैव त्वं तथैवाऽन्ये भवन्तीह विमोहिताः ।। ४७ ।।**

य एष नारायणाराधनरूपः पञ्चरात्राद्युक्तः हरिप्रसादहीनानां दुश्चरोऽनुष्ठातुमशक्यः ।। ४७ ।।

तदनुगृहीतानां ज्ञेयं भगवद्रूपमाह - **कृष्ण इति** ।

**कृष्ण एव हि लोकानां भावनो मोहनस्तथा ।**
**संहारकारकश्चैव कारणं च विशां पते ।। ४८ ।।**

भावनः उत्पादकः मोहनोऽविद्यानियामक इति विश्वोदयादिकर्तृत्वेन हरिं तदनुगृहीताः सात्त्विका एव जानन्तीति भावः ।। ४८ ।।

एवं स्थलान्तरेऽपि सामान्यतः प्रश्नानन्तरं विशिष्योत्तरेण हरिरेव सर्वोत्तमतयोदित इत्याह - **बहव इति** ।

**बहवः पुरुषा ब्रह्मन्नुताऽहो एक एव तु ।**
**को ह्यत्र पुरुषः श्रेष्ठः का वा योनिरिहोच्यते ।। ४९ ।।**

जनमेजयेन सामान्यतः सर्वोत्तमः पुरुषः पृष्टः ।। ४९ ।।

**बहूनां पुरुषाणां च यथैका योनिरुच्यते ।**
**तथा तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकम् ।। ५० ।।**

बहूनां पुरुषाणां कारणमेकं ब्रह्म न तु पुरुषैक्यमिति भावः[1] ।। ५० ।।

**(वैजयन्ते चतुर्मुखशङ्करसंवादसमाख्यया हरिसर्वोत्तमत्त्वसाधनम्)**

ब्रह्मरुद्रसंवादेन सर्वोत्तमतया हरिं निर्धारयितुमारभते -

एकदा रुद्रः क्षीरोदमध्यस्थे वैजयन्तपर्वते समाधिस्थं ब्रह्माणं प्राप्य नमस्कृत्य तेनाभिनन्दितः सन्नुवाच -

**बहवः पुरुषा ब्रह्मंस्त्वया सृष्टाः स्वयम्भुवा ।**
**सृज्यन्ते चापरे ब्रह्मन् स वै कः पुरुषो विराट् ।। ५१ ।।**

**कोऽसौ हि चिन्त्यते ब्रह्मंस्त्वयैकः पुरुषोत्तमः ।**
**एतं हि संशयं ब्रूहि महत्कौतूहलं हि मे ।। ५२ ।।**

पृष्टो ब्रह्मा चोवाच -

**बहवः पुरुषाः पुत्र ये त्वया समुदाहृताः ।**
**एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्युत ।। ५३ ।।**

**शृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः ।**
**अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ।। ५४ ।।**

---

१. इदं वाक्यं क कोशे नास्ति ।

**बहव इति** । सर्वपुरुषातिक्रान्तं यथा स्यात्तथा द्रष्टव्यम् । एवमन्यपुरुषसाधारणं न द्रष्टव्यम् ।। ५३ ।। ५४ ।।

**न हि शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम ।**
**स गुणैर्निर्गुणैर्विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ।। ५५ ।।**

तत्प्रसादं विना तद्दर्शनं दुर्लभमित्यर्थः । निर्गुणैः प्राकृतगुणासंस्पृष्टैरलौकिकैर्गुणैर्विश्वः पूर्णः स्नेहसन्ततियुतज्ञानेन दृश्यः स्मृतः ।

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप इति ।। (भ.गी.११.५४)

स्मृत्या कथितम् ।। ५५ ।।

**एवं हि परमात्मानं केचिदिच्छन्ति पण्डिताः ।**
**एकात्मानं तथात्मानमपरे ज्ञानचिन्तकाः ।। ५६ ।।**

केचित्पण्डिता एकात्मानमेव परमात्मानं सर्वोत्तमतयेच्छन्ति । मुक्तावपि जीवानां तत्साम्यं नेच्छन्तीत्यर्थः । अपरे ज्ञानचिन्तका यथा परमात्मा तथाऽऽत्मानं जीवमपि मुक्ताविच्छन्ति । "निरञ्जनः परमं साम्यमुपैति" (मुण्ड.उ.३.२.३) इति श्रुतेः ।। ५६ ।।

**(कर्मबद्धो जीवः तदबद्धः परमात्मा सकलशब्दवाच्यः)**

**तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः ।**
**स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ।। ५७ ।।**

**न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ।**
**कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ।। ५८ ।।**

**ऋग्वेदे स यजुर्वेदे तथैवाथर्वसामसु ।**
**पुराणे सोपनिषदे तथैव ज्यौतिषेऽर्जुन ।। ५९ ।।**

विश्वोदयादिकर्मफलैर्न लिप्यते । कर्मात्मा कर्मणां कर्त्तेत्यभिमानी जीवः मोक्षबन्धैर्युज्यत इत्यर्थः । हरेर्निर्गुणत्वं तु प्राकृतगुणशून्यत्वम् ।

'सत्वादयो न सन्तीशे यत्र च प्राकृता गुणाः' ।
इति वैष्णवोक्तेः ।। ५७-५९ ।।

**साङ्ख्ये च योगशास्त्रे च आयुर्वेदे तथैव च ।**
**बहूनि मम नामानि कीर्त्तितानि महर्षिभिः ।। ६० ।।**

सन्ध्यभाव आर्षः । भारते सर्वशब्दवाच्यत्वं हरेः स्पष्टमुक्तम् ।। ६० ।।

**(हरिपारम्य एव वेदादीनां तात्पर्यमित्यत्र भारतसम्मतिकथनम्)**

उपक्रमोपसंहारादिलिङ्गैर्वेदादीनां तात्पर्यं हरावेवेति भारतवाक्येन निर्धारयति - **वेद इति** ।

**वेदे रामायणे चैव पुराणे भारते तथा ।**
**आदावन्ते च मध्ये च हरिः सर्वत्र गीयते ।। ६१ ।।**

**वेद इति** । सर्वोत्तमतया गीयते इत्यर्थः ।। ६१ ।।

**(हरेः परमत्वे अवतारेषु रुद्रपूजनादिकं कथमिति शङ्कासमाधानम्)**

यत्तु श्रीकृष्णेनावतारान्तरेण च रुद्रादिः पूज्यते तत्तु पृथ्वादाविव तत्र जीवविशेषे स्वांशावेशाभिप्रायेण । शिवादेः क्वचिन्नारायणाभेदोक्तिरपि तदभिप्राया । पुत्रादीनि फलानि कामयमानान् जनान् रुद्रादिपूजायां प्रवर्त्तयितुं च क्वचित्पूज्यत इत्येतदर्थकभगवद्वचनान्युदाहरति - **अहमिति** ।

**अहमात्मा हि लोकानां विश्वानां पाण्डुनन्दन ।**
**तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम् ।। ६२ ।।**

विश्वानां सर्वेषामात्माऽन्तर्यामी आत्मानं रुद्रान्तर्यामिणं रुद्रान्तःस्थमदंशावतारं वा पूजयामि ।। ६२ ।।

लोकशिक्षार्थं पूजयामीत्याह - **मयेति** ।

**मया कृतं प्रमाणं हि लोकः समनुवर्त्तते ।**
**प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम् ।। ६३ ।।**

रुद्रादयो देवाः पूज्याः इति प्रमाणं मया कृतम् । तत्कथं निर्वहेत् यदि रुद्रादिर्मया न पूज्येतेति रुद्रादिर्मया पूज्यते । यथा नारदादयो विप्राः पूज्यन्त इत्यर्थः ।। ६३ ।।

स्वोत्तमस्याभावात्तद्बुद्ध्याऽहं कञ्चिन्न भजामीत्याह - **न हीति** ।

**न हि विष्णुः प्रणमति कस्मैचिद् विबुधाय च ।**
**अत आत्मानमेवेति ततो रुद्रं भजाम्यहम् ।। ६४ ।।**
**सब्रह्मकाः सरुद्राश्च सेन्द्रा देवा महर्षिभिः ।**
**अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ।। ६५ ।।**
**भविष्यतां वर्त्तताञ्च भूतानां चैव भारत ।**
**सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः ।। ६६ ।।**

आत्मानं स्वांशावतारम् ।। ६४ ।। ६५ ।। ६६ ।।

युधिष्ठिरेण रुद्रस्य माहात्म्यं विशिष्य पृष्टम् । पुत्रकामेन श्रीकृष्णेन रुद्र आराधित इति तदाराध्यत्वरूपं रुद्राङ्गेषु सर्वदेवानामवस्थानादिकं च सकामानामुपासनादाढर्याय वर्णितम् । एवं क्वचित्पुराणादौ रुद्रादेः सर्वेश्वरत्ववर्णनं तदपि तदुपासकांस्तत्र प्रवर्त्तयितुं स्तवनमेव न तु वस्तुतत्त्वम् । तथा साधारण्येन प्रवृत्ते महाभारते पञ्चमवेदे सामान्यतः प्रश्नस्य विशेषेण रुद्रादिसर्वेश्वरत्वप्रतिपादकं प्रतिवचनं नास्त्येव । हरेस्तथा प्रतिपादकं भारतमसकृदुदाहृतं पुनरप्युदाहरति - **किमिति** ।

**किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।**
**स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ।। ६७ ।।**

**को धर्मः सर्वधर्माणां भवतः परमो मतः ।**
**किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ।। ६८ ।।**

दैवतं जगदाराध्यम् । एकं मुख्यं परमुत्कृष्टमयनमाश्रयः ।।६७-६८।।

सामान्यतः प्रश्नस्य विशेषेण विष्णुं निर्धारयन्नुत्तरमाह - **जगदिति** ।

**जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।**
**स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ।। ६९ ।।**

**तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।**
**ध्यायंस्तुवन्नमस्यंश्च यजमानस्तमेव च ।। ७० ।।**

**अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।**
**लोकाध्यक्षं सुराध्यक्षं धर्माध्यक्षं कृताकृतम् ।। ७१ ।।**

न आदिनिधने यस्य तम् ।। ७१ ।।

**जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ।**
**योगो ज्ञानं तथा साङ्ख्यं विद्या शिल्पादिकर्म च ।**
**वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ।। ७२ ।।**

विश्वोदयादिकर्तृत्वेन हरेरेव सर्वोत्तमत्वं व्यवस्थापितम् ।। ७२ ।।

**मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।। ७३ ।।**

भगवता [1]अन्यस्य स्वोत्तमत्वं स्पष्टं निषिद्धम् ।। ७३ ।।

**(हरेस्सर्वान्तर्यामित्वे भारतवचनोदाहरणम्)**

सर्वप्राणिहृदयनिष्ठतया नियामकत्वरूपान्तर्यामित्वं हरेरेवेत्यर्थे स्मृतिमुदाहरति - **सर्वस्येति** ।

---

१. अन्यस्य इति क कोशे नास्ति

**सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम् ।। ७४ ।।**

स्मृतिरतीतस्यानुसन्धानम् । ज्ञानम् अनुभवः । अपोहनं ज्ञानाभावो मत्तः सकाशादेव । मम कार्यमात्रं प्रति जनकत्वात् । वेदैश्चेत्यनेन सर्व-शब्दवाच्यत्वं समन्वयाध्यायप्रतिपाद्यं हरेरेव सिद्धम् । वेदानामन्तः निर्णयः यैस्तानि ब्रह्मसूत्राणि तत्कृत् । स एव वेदविदित्यनेन तस्याप्तत्वं सिद्धम् ।। ७४ ।।

आप्तत्वमेव स्पष्टयति - **भोक्तारमिति** ।

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।। ७५ ।।**

भोक्तारं भक्तार्पितोपहारस्वीकर्त्तारं पालकं वा । महेश्वरमित्यनेन भ्रमप्रमादकरणापाटवादिदोषा निराकृताः । सुहृदमित्यनेन विप्रलिप्साद्य-भावो निरुपध्युपकारकत्वं च सिद्धम् । एतादृशानन्तगुणविशिष्टस्य हरे-र्ज्ञानं मोक्षहेतुरित्यपि सिद्धम् ।। ७५ ।।

**(पञ्चरात्रश्रैष्ठ्यसमर्थनम्)**

"शास्त्रयोनित्वात्" (ब्र.सू.१.१.३) इति सूत्रेण "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ.उ.५.९.२६) इति श्रुत्या चेश्वरस्य शास्त्रैकगम्यत्वमुक्तम् । शास्त्रं च वेदस्तदुपबृंहकं पञ्चरात्रादिकं च । अतः पञ्चरात्राद्युपबृंहितवेदैने-वेश्वरो ज्ञेयो न तु पाशुपततामसपुराणाद्युपबृंहितेनेत्याशयेन पञ्चरात्रस्य प्रमाणश्रेष्ठत्वप्रतिपादकं **भारतमुदाहरति - साङ्ख्यमिति** ।

**साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।**
**ज्ञानान्येतानि भिन्नानि उताऽहो नेति चोच्यताम् ।। ७६ ।।**

'वेदारण्यकं' पञ्चरात्रम् । 'भिन्नानि' विरुद्धानि ।। ७६ ।।

एतेषां परस्परविरोधमाह - **साङ्ख्यमिति** ।

**साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।**
**ज्ञानान्येतानि भिन्नानि नात्र कार्य्या विचारणा ।। ७७ ।।**

ज्ञायते यैस्तानि ज्ञानसाधनानि शास्त्राणि भिन्नानि विरुद्धानि ।।७७।।

अन्योन्यं विरोधमुक्त्वा पञ्चरात्रस्य श्रेष्ठत्वमाह - **पञ्चरात्रस्येति** ।

**पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।**
**ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते ।। ७८ ।।**

एतेषु प्रागुक्तेषु शास्त्रेषु एतत्पञ्चरात्रं विशिष्यते श्रेष्ठं भवति यतोऽत्याप्तो नारायणोऽस्य वक्ता चतुर्मुखादयश्च श्रोतारः ।।७८।।

पञ्चरात्रोपबृंहितवेदोक्तमार्गेणेश्वरमाराधयन्तो मुक्ता भवन्तीत्याशयेनाह - **पञ्चरात्रेति** ।

**पञ्चरात्रविदो मुख्या यथाक्रमपरा नृप ।**
**एकान्तभावोपगता वासुदेवं विशन्ति ते ।। ७९ ।।**

पञ्चरात्रवेदितारो मुख्याः श्रेष्ठाः । यतो 'यथाक्रमपराः'। मोक्षमार्गे यः क्रमस्तत्परायणास्त एव न तु पाशुपतादयः । एकान्तभावः पञ्चरात्रोक्त-रीत्या भक्तिस्तत्पराः ।। ७९ ।।

पञ्चरात्रस्य वेदात्मकत्वमाह - **इदमिति** ।

**इदं महोपनिषदं चतुर्वेदसमन्वितम् ।**
**साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ।। ८० ।।**

चतुर्वेदैः समन्वितं तदर्थप्रतिपादकत्वात् पञ्चरात्रसंज्ञकम्। साङ्ख्या-दिकं तत एवोद्धृतं तत्र कारणात्मना वर्त्तत इत्यर्थः । कृतान्तो वेदान्तः

उत्तरमीमांसा । तत एवाऽर्थं ज्ञात्वा साङ्ख्यादीनि सच्छास्त्राणि मुनिभिः कृतानीति भावः ।। ८० ।।

मानवादिस्मृतयोऽपि पञ्चरात्रमूलिका इत्याह - **अस्मादिति** ।

**अस्मात्प्रवक्ष्यते धर्मान् मनुः स्वायम्भुवः स्वयम् ।**
**वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।। ८१ ।।**

समितं मिलितं प्रमाणतायां तुल्यं च ।। ८१ ।।

उक्तमर्थं सङ्गृह्याह अग्र इत्यादिना लोकान् शिक्षयितुमित्यन्तेन -

**अग्रे नारायणो ह्यासीन्न ब्रह्मा न च शङ्करः ।**
**ब्रह्मा प्रजायते विष्णोः प्रतिसर्गे शिवस्तथा ।। ८२ ।।**

अग्रे सृष्टेः पुरा ब्रह्मा नासीत्किं तु हरिरेवासीत् । विष्णोः सकाशाद् ब्रह्मा शिवश्च प्रतिसर्गं जायते । "नारायणाद् ब्रह्मा जायते नारायणाद् रुद्रो जायते" (म.ना.उ.) इति श्रुतेः ।। ८२ ।।

**(विष्णुर्नित्यविग्रहः । तस्य अवतारो नाम प्रादुर्भावः)**

सात्त्विकेषु पुराणेषु भारते वेदे रामायणादौ सृष्टिप्रकरणे ब्रह्मशिवादीनामिव श्रीविष्णोरुत्पत्तिर्नोक्तेति नित्यविग्रहोऽयम् । अवतारस्तु नित्यविग्रहस्याविर्भाव एव । न च नूतनदेहलाभोऽतो निरतिशयैश्वर्यं तस्येत्याशयेनाह - **नेति** ।

**न विष्णोः क्वाऽपि जन्मोक्तिः पुराणे सात्त्विके तथा ।**
**भारते पञ्चमे वेदे सृष्टिप्रकरणे क्वचित् ।। ८३ ।।**

देवक्यादावाविर्भावस्तु प्राच्यामिन्दोरिव[1] नापकर्षहेतुः ।। ८३ ।।

१. तदुक्तं भागवते - देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाश्रयः ।
आविरासीद् यथा प्राच्यां दिशीन्दुरिव पुष्कलः ।। इति ।।

[1]यत्त्वौपमन्यवाख्याने भारते श्रीकृष्णेन पुत्रार्थं रुद्र आराधितस्तत्र रुद्राङ्गेभ्यो विष्णुसहितानामुत्पत्तिवर्णनं तत्तूपासनादार्ढ्याय सकामांस्तत्र प्रवर्त्तयितुं च विशेषेण प्रश्नोत्तराभ्यां स्तुतिरूपतया तदैश्वर्यवर्णनं कृतम् । न तु सामान्यप्रश्नविशेषोत्तराभ्यां विष्णोरेव शिवादेरैश्वर्यं भारतादौ क्काऽपि वर्णितम् । [2]क्कचित्तामसपुराणादौ तद्वर्णनं तदुपासनार्थं लोकव्यामोहनाय चेत्याशयेनाह - **यत्रेति** ।

**यत्र सामान्यतः प्रश्नः स्याद्विशेषत उत्तरम् ।**
**तेन सर्वेश्वरत्वस्य निःशङ्कं निर्णयो भवेत् ।। ८४ ।।**

**न तूपासनादार्ढ्यार्थं यत्पृष्टं तस्य चोत्तरात् ।**
**यथोपमन्यवाख्याने प्रश्नोत्तरप्रवर्त्तनम् ।। ८५ ।।**

विष्णुविषयकौ प्रश्नोत्तरौ प्रागुदाहृतौ स्त इत्याह - **विष्णाविति** ।

**विष्णौ सामान्यतः प्रश्ने विशेषतस्तथोत्तरम् ।**
**विद्यते भारते नास्ति रुद्रादिविषये क्कचित् ।। ८६ ।।**

स्पष्टम् ।। ८६ ।।

उपक्रमादिलिङ्गैर्महातात्पर्यतो हरिं ज्ञापयन्ति वेदा इत्याशयेनाह - **ज्ञापयन्तीति** ।

**ज्ञापयन्ति हरिं वेदा लिङ्गैरुपक्रमादिभिः ।**
**भारतोपकृताः सर्वे पञ्चरात्रोपबृंहिताः ।। ८७ ।।**

**पञ्चरात्रस्य मानेषु श्रैष्ठ्यमुक्तं हि भारते ।**
**नारायणकृतत्वाद्धि तद्विषयत्वतस्तथा ।। ८८ ।।**

---

१. यवामन्य. ख.

२. कश्चित्तमपुरा. ख.

नारायणेनात्याप्तेन कृतत्वात् सत्यानन्तगुणस्य तस्यैव प्रतिपादकत्वाच्च श्रैष्ठ्यं पञ्चरात्रस्य [1]नारायणीयाख्यानेनोक्तम् ।। ८८ ।।

कुत्रचिदवतारे हरिणा रुद्रादिपूजनं लोकशिक्षार्थमित्याह -

**लोकान् शिक्षयितुं विष्णुरवतारेषु कुत्रचित् ।**
**आराधयति रुद्रादीन् सदाऽऽप्तकाम एव सन् ।। ८९ ।।**

**(हरिभिन्नानां चतुर्धोत्पत्तिः)**

हरिभिन्नानां सर्वेषामुत्पत्तिः प्रमिता । सा त्रिधेत्याह - **स्वरूपेति** ।

**स्वरूप[2]देहधर्माणामुत्पत्तिस्त्रिविधा मता ।**
**लाभो विशेषरूपस्य तुरीयोत्पत्तिरीर्यते ।। ९० ।।**

त्रैविध्यं निरूपयति - **महदिति** ।

**महदादेः स्वरूपस्य चितो देहस्य सम्भवः ।**
**आनुपूर्व्यादिधर्मस्य लाभः शब्दादिकस्य हि ।। ९१ ।।**

[3]महदादेर्जडस्य स्वरूपेणैवोत्पत्तिः । चितो बद्धजीवस्य देहलाभ एवोत्पत्तिः । नित्यस्य [4]वर्णात्मकशब्दस्यानुपूर्व्यादिधर्मलाभ एवोत्पत्तिः । पराधीनत्वं सर्वत्र विवक्षितम् । तेन मुक्तानां स्वेच्छया देहलाभेऽपि न तन्निबन्धनोत्पत्तिः ।। ९१ ।।

---

१. नारायणोपाख्यान. ख.

२. वेद. ख.

३. महज्जडस्य. क.

४. रणध्वनि. ख.

मुक्तसाधरणीमुत्पत्तिमाह - **मुक्तानामिति** ।

**मुक्तानां निजरूपस्य लाभो भगवदिच्छया ।**
**प्रकृत्याद्यभिमानादेर्लाभः श्रियस्तथोच्यते ।। ९२ ।।**

प्रागनाद्यविद्यावृतपूर्णानन्दलाभः एवं पराधीनविशेषावाप्तिरूपोत्पत्तिर्मुक्तानाम् । सृष्टिकाले प्रकृत्याद्यभिमानित्वरूपपराधीनविशेषावाप्तिरूपोत्पत्तिः श्रियः ।। ९२ ।।

**(हरेस्सम्भाव्यमानो नाशोऽपि चतुर्धा)**

**पारतन्त्र्यं परं ज्ञेयं निदानं वस्तुसम्भवे ।**
**विनाशोऽपि चतुर्धा स्याद्वस्तूनामच्युतेच्छया ।। ९३ ।।**

वस्तूनां सम्भवे कथितोत्पत्तौ पारतन्त्र्यं परेशाधीनत्वं परं केवलं कारणम् । वस्तूनामच्युतस्य हरेरिच्छया विनाशोऽपि चतुर्विधः । यद्यपि जडस्य स्वरूपेण नाशो, बद्धजीवानां देहनाशो, रमायाः प्रलये प्रकृत्याद्यभिमानत्यागरूपो नाशः सम्भवति । मुक्तजीवानामाविर्भूतपूर्णानन्दस्य वियोगाभावान्नाशो न सम्भवति । तथापि मुक्ताः स्वेच्छया प्राप्तं विग्रहं बाह्यलीलां च स्वेच्छयैवानायासेन विहाय परानन्दानुभवाप्लुताः सन्तो भगवदुदरे स्वच्छन्दाः सावकाशास्तिष्ठन्तीति भवति तेषामपि बाह्यलीलादित्यागरूपो विनाशः । पराधीनत्वं चतुर्थो नाशः सर्वसाधारणः ।। ९३ ।।

अध्यायान्ते स्वेष्टदेवं समस्करोति - **श्रीति** ।

**श्रीब्रह्मेशसुरेशाद्या यस्याऽऽज्ञां शिरसा सदा ।**
**वहन्ति प्रयता देवं वन्दे [1]श्रीहयकन्धरम् ।। ९४ ।।**

---

१. श्रीहयकन्धरं हि तम् - क.

श्री रमा ब्रह्मा चतुर्मुखः ईशो रुद्रः सुरेशः शक्रः आदिपदान्मुनिगन्धर्वमनुष्यदानवदैत्ययक्षराक्षसाः प्रयताः सावधानाः ।। ९४ ।।

*।। इति श्रुतिसिद्धान्तसङ्ग्रहे वनमालिमिश्रविरचिते*
*हरिसर्वोत्तमत्त्ववर्णनं नाम चतुर्थोऽध्यायः ।।*

## ।। अथ पञ्चमोऽध्यायः ।।

प्राक् पृष्टं हरेरद्भुतमहिमानं लब्धावसरो वर्णयति ।

अध्यायादौ स्वेष्टं स्मरति -

### गुरुरुवाच

**कुतर्कास्पृष्टधामाऽसावचिन्त्यानन्तशक्तिमान् ।**
**जयति श्रीहयग्रीवो भक्तानुग्रहतत्परः ।। १ ।।**

"तर्काप्रतिष्ठानात्" (ब्र.सू.२.१.१२) इति न्यायेन वेदाननुकूलतर्कैरस्पृष्टं धाम स्वरूपं लोकवैभवादिकं यस्य । तत्र हेतुरचिन्त्येति । "विचित्रशक्तिः पुरुषःपुराण" इति श्रुतेः । "आत्मनि चैवं विचित्राश्च हि" (ब्र.सू.२.१.२९) इति सूत्रात् । भक्तानुग्रहे तत्परः उद्युक्तः ।। १ ।।

**(सृष्ट्याद्यष्टकर्तृत्वं हरेर्लक्षणम्)**

स्वप्रत्यक्षयोग्याशेषविशेषविशिष्टस्य हरेरापरोक्ष्यं [1]मोक्षहेतुर्भविष्यति "तरति शोकमात्मवित्" (छां.उ.७.१.३) इत्यादि श्रुतेः "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" (भ.गी.१८.५५) इति स्मृतेश्च । "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृह.उ.३.२.६.) इति श्रुतिसिद्धातीन्द्रियस्वरूपस्य हरेर्ज्ञानं लक्षणज्ञानाधीनमिति तल्लक्षणं वक्तव्यम् । तच्च "जन्माद्यस्य यत" (ब्र.सू.१.१.२) इति सूत्रेणास्य विश्वस्य जन्म त्राणं नाशश्च यतो हरेरेव तानि प्रत्येकं [2]त्रीणि लक्षणानि । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" (तै.उ.३.१) इति श्रुतेः । तद्वर्णितुं, प्राक् सूत्रस्थादिपदगृहीतलक्षणान्तरमाह - **बन्धस्येति** ।

---

१. मोक्षे तु - ख.

२. लक्षणत्रयं कृतम् ।

**बन्धस्य मोक्षस्य तथाऽज्ञताया**
**ज्ञानस्य कर्त्ता नियतेश्च विष्णुः ।**
**ध्येयः सदाऽतो भवतापतप्तै -**
**र्ज्ञेयश्च मुक्तैः सुखविग्रहोऽसौ ।। २ ।।**

बन्धस्यानादेरपि तत्सङ्कल्पाधीनत्वात्तं प्रति क्षेमसाधारणी कारणताऽस्त्येव । लोके यो बन्धकः स एव मोचयितुं क्षमो दृष्ट इति "तेषामहं समुद्धर्त्ता" (भ.गी.१२.७) इत्यागमोक्तमोचकत्वान्यथानुपपत्त्या बन्धकत्वं सिद्धम् । अज्ञत्वं ज्ञानाभावः । सोऽपीशात् "मत्तः स्मृतिर्ज्ञानमपोहनञ्च" इति स्मृतेः । अपोहनं नाशः । तत्त्वज्ञानमपि तत एव । "ददामि बुद्धियोगं तम्" इति स्मृतेः । बन्धमोक्षयोः परस्परविरुद्धस्वभावस्य, अज्ञाननिष्ठावरणस्वभावस्य, ज्ञाननिष्ठाज्ञाननिवर्त्तनस्वभावस्य चान्येषां वस्तूनां स्वभावस्य च या नियतिर्नियमनं तस्याः कर्त्तेत्यर्थः । तथा च सूत्रेणाष्टौ स्वरूपलक्षणानीति सिद्धम् ।। २ ।।

**(यत्राभेदः प्रमाणसिद्धः तत्र भेदव्यवहारस्तु विशेषात्)**

विविधविचित्रसत्यविश्वोदयादिकर्तृत्वमानन्दोद्रेकादेव हरेरित्याशयेन तस्य निर्दुष्टानन्द[1]रूपत्वं विशेषाद् गुणिगुणभावं चाह - **सदिति** ।

**सच्चिदानन्दरूपोऽसौ तद्गुणकस्तथा विभुः ।**
**तस्य गुणाद्यभेदेऽपि विशेषो वर्त्तते सदा ।। ३ ।।**

"सत्यं ज्ञानमनन्तं ब्रह्म" (तै.उ.भृगुवल्ली) "विज्ञानमानन्दं ब्रह्म" (बृ.उ.५.९.२८) इति श्रुत्या हरेः सच्चिदानन्दरूपत्वोक्तेः । "आनन्दं ब्रह्मणो विद्वान्" (तै.उ.) "यः सर्वज्ञः" (मा.उ.११.९.१) इत्यादिना तस्य तद्धर्मकत्वोक्तेश्च । ननु "एवं धर्मान् पृथक्पश्यन् तानेवानुविधावति"

१. रूपत्वमाह - ख.

(क.उ.४.१४) इति श्रुत्या गुणानां धर्मिपार्थक्यनिषेधात् धर्माः हरेरभिन्ना-श्चेद्धर्मधर्मिभावहानिः । "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादीनां पर्यायतापत्ति-श्चेत्यत आह - **तस्य गुणाद्यभेदेऽपीति** । भेदाभावेऽपि भेदप्रतिनिधि-र्विशेषोऽङ्गीक्रियते । तेन धर्मधर्मिभावापर्यायत्वाद्युपपत्तिः ।। ३ ।।

**(मायावादिभिस्तार्किकैरपि विशेषोऽङ्गीकार्यः)**

तदेवाऽऽह - **भेदेति** ।

**भेदप्रतिनिधिः स स्यात् व्यवहारस्य साधकः ।**
**केचिद्भेदं हि वाञ्छन्ति [1]गुणिगुणादिवस्तुनः ।। ४ ।।**

विशेषो [2]गुणिगुण्योरभेदेऽपि भेदाभावेऽपि भेदकार्यस्य धर्मधर्मिव्यव-हारस्यापर्यायत्वादेश्च निर्वाहकः । मायिनामपि विशेषाङ्गीकार आव-श्यकः । अन्यथा "विज्ञानमानन्दं ब्रह्म" (बृ.उ.५.९.२८) "सत्यं ज्ञानम-नन्तं ब्रह्म" (तै.उ.भृगुवल्ली) इत्यादौ पर्यायता स्यात् । भ्रमाधिष्ठानत्वा-दिना चैतन्यस्य सदा भानेऽपि तदभिन्नानन्दस्येदानीमप्रकाशानुपपत्तिश्च । ज्ञानानन्दयोरेकतरपरिशेषे च मोक्षे आनन्दप्रकाशो न स्यात् । न च कल्पितसत्यत्वादिविशिष्टस्य वाच्यत्वादपर्यायत्वाद्युपपत्तिः लक्ष्यं त्वखण्डं ब्रह्मेति वाच्यम् । गङ्गापदलक्ष्यतीरस्यागङ्गात्ववत्सत्यादिपदलक्ष्यस्यासत्य-त्वाज्ञानत्वपरिच्छिन्नत्वाब्रह्मत्वापत्तेः । न च जहदजहल्लक्षणया नासत्य-त्वाद्यापत्तिः । वाच्यात्सत्यादेरधिकस्यार्थस्य लाक्षणिकबोधेऽभाने लक्षणा-वैयर्थ्यापत्तेः । न हि वाच्य एवार्थे पदस्य लक्षणा दृष्टा युक्ता वा । तत्त्व-मसीत्यत्र शोधितात्तत्पदार्थात् वाक्यार्थस्यैक्यस्य न तावत्तन्मते भेदो भेदा-भेदौ वा ऐक्यस्य मिथ्यात्वाद्यापत्तेः । तत्र विशेषो न चेत् कथं

---

१. गुणगुण्यादि इति पाठः साधुरिति भाति ।     २. गुणगुणिनोः इति भवेत् ।

स्वप्रकाशचैतन्यप्रकाशेऽप्यैक्यस्याप्रकाशः? चित्प्रकाशस्य भेदभ्रमाविरोधित्वेऽपि तदभिन्नैक्यप्रकाशस्य तद्विरोधः? चितो निरपेक्षत्वेऽप्यैक्यस्य सापेक्षत्वादिकम्? 'समवायः सम्बन्धः' 'सत्ता सती' 'भेदो भिन्नः' 'अन्त्यविशेषो व्यावृत्तः' 'कालः सदाऽस्ति' 'देशः सर्वत्र' इत्यबाधितव्यवहारार्थं विशेषोऽङ्गीकार्यः । 'प्रमेयत्वं प्रमेयम्' 'घटाभावे घटो नाऽस्ती'त्यादावभेदेऽपि धर्मधर्मिभावाधाराधेयभावादेर्विशेषानङ्गीकारेऽनुपपत्तेः । स च विशेषो वस्त्वभिन्नः स्वनिर्वाहकश्चेति नानवस्था । तस्य तथात्वं धर्मिग्राहकमानसिद्धम् । यत्र भेदाभावो भेदकार्यं च प्रमितं तत्रैव विशेषः कल्प्यत इति न प्रमितभेदघटपटेशजीवादिषु विशेषमादाय भेदत्यागः । न हि सोमलताभावे तत्प्रतिनिधिः पूतिक इति स तल्लाभेऽपि ।

मतान्तरमाह - **केचिदिति** । न च गुणगुणिनोर्भेदेऽनवस्थादोषः । प्रामाणिकानवस्थाया अदोषत्वात्क्वचित्स्वनिर्वाहकत्वाद्वा । न च ब्रह्मणो ज्ञानादिधर्मकत्वे जडत्वाद्यापत्तिः ज्ञानादिस्वरूपत्वस्याप्यभ्युपगमात् । न च ज्ञानादिद्वयवैयर्थ्यं प्रमाणेन प्रयोजनमुखानिरीक्षणात् । न च स्वरूपधर्मयोर्ज्ञानादिरूपत्वे भेदानुपपत्तिः । दण्डी पुरुष इत्यत्र दण्डपुरुषयोः पार्थिवयोर्दण्डत्वपुरुषत्वाभ्यां यथा भेदस्तथा स्वरूपधर्मयोर्ज्ञानानन्दादिरूपयोर्द्रव्यत्वगुणत्वाभ्यां हि भेदः । न चोक्तश्रुतिविरोधः । तया ब्रह्मगुणानां यावद्द्रव्यभावित्वप्रतिपादनात् ब्रह्मगुणविषयकानित्यत्वज्ञानस्यैव निन्दितत्वात् । द्रव्ये विद्यमानेऽपि यथा पाकादिना रूपादयो गुणा नश्यन्ति न तथा हरौ विद्यमाने तद्गुणा ज्ञानादयो नश्यन्तीत्यर्थे श्रुतेस्तात्पर्यम् ।।४।।

### (हरेर्ज्ञानेच्छादीनां नित्यत्वे सदा सृष्ट्याद्यापत्तिपराकरणम्)

हरिज्ञानेच्छादीनां नित्यत्वेऽपि न सदा सृष्टिस्तत्कालस्य सहकारिणः सदाऽभावादित्याह - **स्वेति** ।

**स्वेच्छया स प्रविश्यादौ प्रधानं पुरुषं तथा ।**
**क्षोभयत्यागते काले जीवादृष्टमुपेत्य च ।। ५ ।।**

सृष्टिकाले आगते सति हरिः स्वेच्छया प्रधानं पुरुषं चादौ प्रथमं प्रविश्य द्वौ क्षोभयति । विषमसृष्टिकर्तृत्वेन प्रसक्तवैषम्यनिरासायाह - **जीवेति** । विस्तृतं चैतत्प्राक् ।। ५ ।।

**(विश्वसृष्टिक्रमः)**

सृष्टिक्रममाह - **महदिति** ।

**महदादीनि तत्त्वानि सर्वशः सृजतीश्वरः ।**
**प्रविश्यानेकधा रूपैः स्यात्सर्वेषां नियामकः ।। ६ ।।**

सर्वशः सर्वाणि । आदौ प्रधानान्महत्तत्त्वं ततोऽहङ्कारः । स त्रिविधः सात्विको राजसस्तामसश्च । सात्विकान्मन इन्द्रियाधिष्ठातृदेवाश्च । राजसाद् बुद्धीन्द्रियाणि । चित्तस्य मनस्यन्तर्भावः । तामसाद् भूततन्मात्रा । इयं प्रक्रिया पुराणादौ स्पष्टा । ईश्वरः अघटनघटनापटीयस्सामर्थ्यः । ननु जडानां कथं प्रवृत्तिस्तत्राह - **प्रविश्येति** । अन्तर्यामिबहुरूपैरन्तः प्रविश्य सर्वेषां नियामकः प्रवर्त्तकः स्यात् ।। ६ ।।

ननु विरुद्धानामग्निजलादीनां कथं परस्परं मेलनं तत्राह - **मेलयित्वेति** ।

**मेलयित्वा ततस्तानि सृजत्यण्डं दयानिधिः ।**
**ब्रह्मादीन् स्तम्बपर्यन्तान् सृजति प्राणिनस्ततः ।। ७ ।।**

**मेलयित्वेति** । ततः प्रवेशानन्तरं तानि विरुद्धान्यपि स्वसामर्थ्याधानेनाविरोधं सम्पाद्य मेलयित्वाऽण्डं ब्रह्माण्डं सृजति । दयानिधिः सन्नैव

न तु सप्रयोजनः । ततोऽनन्तरं ब्रह्मरुद्रादीन् स्तम्बपर्यन्तान् प्राणिनः सृजति ।। ७ ।।

**(एकधा बहुधेति श्रुतिव्याख्यानम्)**

'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' (त्रि.ता.५.२२) इति श्रुतिं व्याख्याति - **एकधेति** ।

**एकधा मूलरूपेणान्तर्यामी बहुधा हरिः ।**
**बहुधेति श्रुतावुक्तोऽवतारादितया तथा ।। ८ ।।**

यथाऽऽकाशे चन्द्र एको जलेऽनेकधा दृश्यते तथा मूलरूपेणैकोऽपि हरिरचिन्त्यशक्त्याऽन्तर्यामिरूपैः रामकृष्णाद्यवताररूपैश्च बहुधा श्रुत्यादिना प्रतीयते ।। ८ ।।

एतदेव स्पष्टयति - **तदिति** ।

**तत्तत्कार्येष्वचिन्त्यात्माऽऽविर्भूतोऽन्तर्नियामकः ।**
**बहुभवनं हि तस्योक्तमिदं चाविकारिणः ।। ९ ।।**

तत्तन्महदादिपृथिव्यन्तेष्वचिन्त्यात्मा नियामकः आविर्भवति । "एकोऽहं बहु स्याम्" इति श्रुत्युक्तं बहुभवनमिदमेवान्तर्यामिरूपेणाविकारिणः ।। ९ ।।

**(सोऽकामयत इति श्रुत्यर्थवर्णनम्)**

"सोऽकामयत बहु स्यां प्रजायेय । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य । सच्च त्यच्चाभवत्" (छां.उ.६.२.३) इति श्रुत्यर्थमाह - **सदादीति** ।

**सदादिभवनं तस्यान्तर्यामिरूपतोऽन्यथा ।**
**प्रवेशः कार्यजातेषु सृष्ट्युत्तरं कथं हरेः ।। १० ।।**

सदादीनां स्थूलसूक्ष्माणां वस्तूनां नियामकरूपैराविर्भावः सदादिभवनम् । अन्यथा यथाश्रुतसदादिभावाङ्गीकारे क्त्वाप्रत्ययान्तसृजतिनोक्तं पूर्वकाले सर्जनं तदुत्तरं प्रवेशस्तदुत्तरं सदादिभवनमिति श्रुत्यर्थो बाधितः स्यात् । न हि मृदादेर्घटाद्युत्पत्त्यनन्तरं घटादौ प्रवेशः ।। १० ।।

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानाम्' (म.ना.उ. ८.४) इति श्रुत्युक्तप्रकृतिरुपादानं, हरिः कर्तैव सन्निमित्तकारणं, नोपादानमित्यर्थकस्मृतिमुदाहरति - **निमित्तमात्रमिति** ।

**निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।**
**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।। ११ ।।**

एवकारेणोपादानत्वव्यवच्छेदः । सृज्यानां कार्याणाम् । अध्यक्षेण स्वामिना ।। ११ ।।

**मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ।। १२ ।।**

महद्वस्तु प्रधानाख्यं कार्यमात्रस्य योनिरुपादानकारणम् । मम मदधीनम् । तस्मिन्नीक्षणाख्यं गर्भं दधामि । मृदो घटादेरिव ततः सर्वभूतानां कार्याणां सम्भवः ।। १२ ।।

"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति" (छां.उ.१.९.१) इति ब्रह्मण्येव सृष्टिलयोक्त्या तस्योपादानत्वमित्याशङ्कां निराकरोति - **सृष्टिरिति** ।

**सृष्टिर्नाशश्च जालानामूर्णनाभेर्निमित्ततः ।**
**तस्या नाशेऽन्यथा तेषां स्थितिः कथं भवेच्चिरम् ।। १३ ।।**

जालानां लयादिर्निमित्ततः निमित्तहेतौ लूतायां दृष्टः । अन्यथा तस्या

उपादानत्वाङ्गीकारे लूताया नाशेऽन्यत्र गमने तेषां जालानां चिरं दीर्घकालस्थितिः कथं स्यात् । न हि तन्त्वादिविनाशे पटादिस्थितिर्दृष्टा । केषाञ्चिन्नये तन्तुनाशेऽपि विनश्यदवस्थस्य पटस्य क्षणमवस्थानमर्ताश्चिरमिति ।। १३ ।।

**भेदाभेदौ हि सिद्धान्ते कार्यकारणयोर्मतौ ।**
**स्याद्भेदे गुरुताधिक्यमभेदे कार्यनिह्नवः ।। १४ ।।**

कार्यकारणयोर्भेदे कपालादिगुरुत्वमेकमन्यच्च घटादेरिति तुलारोपणे द्विगुणं स्यात् । अभेदे जलाद्याहरणादिकार्यस्यापह्नवः स्यात् । घटादिजनककारककलापवैयर्थ्यापत्तेश्च । न च भेदाभेदौ विरुद्धौ, एकरूपेण तयोर्विरोधेऽपि भिन्नरूपेण तयोरविरोधात् । मृत्त्वादिना ह्यभेदः, भेदस्तु घटत्वकपालत्वादिना । महत्त्वाहङ्कारत्वमृत्पिण्डत्वघटत्वाद्याः प्रकृतिनिष्ठा धर्मा अवस्थापदवाच्याः । कारणविशेषेण दण्डादिना घटत्वाद्यभिव्यक्तिः पिण्डत्वानभिव्यक्तिरेव घटाद्युत्पत्तिः । मुद्गरादिना घटत्वाद्यनभिव्यक्तिरेव घटादिनाश इति ।। १४ ।।

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ।। १५ ।।**

स एव पूर्वकल्पीयः कारणात्मना स्थितःभूत्वा भूत्वा रात्र्यागमे प्रलीयतेऽहरागमे प्रभवति । प्रजापतेः रात्र्यहःशब्दौ प्रलयसृष्टिकालपरौ।।१५।।

**(ब्रह्म विश्वं प्रति नोपादानम्)**

ब्रह्मणो विश्वोपादानत्वे तदभिन्नत्वापत्त्या जडत्वाद्यापत्त्या कर्तृत्वानुपपत्तिरित्याशयेनाह - **उपादानेति** ।

**उपादानत्वकर्तृत्वे लोके विरोधिनी मते ।**
**नातो द्रव्यं प्रतीशस्योपादानता भवेत् क्वचित् ।। १६ ।।**

चेतनस्य द्रव्योपादानत्वे कर्तृत्वं न स्यात् मृदादिवत् । आत्मघटसंयोगं प्रत्यात्मनः समवायिकारणत्वमतेऽपि न द्रव्यं प्रति तत्त्वम् ।। १६।।

**विकारित्वं तथात्वे स्यात् मृदादिवच्चितः क्वचित् ।**
**पारिभाषिकमेव स्यात् उपादानत्वमन्यथा ।। १७ ।।**

**विकारित्वमिति** । तथात्वे चेतनस्योपादानत्वे विकारित्वं स्यात् । अन्यथा विकारं विनाप्युपादानत्वाङ्गीकारे पारिभाषिकमेवोपादानत्वमनुपादानतायामेव पर्यवस्येत् । यत्तु शून्यस्य विवर्त्तो विश्वमिति माध्यमिकमतमाश्रित्य अतात्त्विकोऽन्यथाभावरूपो विवर्त्तो विश्वं ब्रह्मण इति विवर्त्ताधिष्ठानरूपमुपादानत्वं तस्य सिद्धमिति नवीनाः प्रलपन्ति तदप्यनेनैव निरस्तम् । न हि शुक्ती रूप्यस्योपादानं, मृद्वा घटस्याधिष्ठानमिति व्यवह्रियते । रूप्यं प्रति शुक्तेरिव ब्रह्मणो जगत्कर्तृत्वानुपपत्तेश्च ।। १७ ।।

**(व्याकरणमहाभाष्यसम्मत्या ब्रह्मणोऽनुपादनत्वस्थापनम्)**

ब्रह्मण उपादानत्वे बाधकमुक्त्वा साधकाभावमाह - **प्रत्याख्यातमिति** ।

**प्रत्याख्यातं फणीन्द्रेण प्रकृतेः सूत्रणं स्फुटम् ।**
**अपाये ध्रुवमित्येतत्सूत्रं संज्ञाविधायकम् ।। १८ ।।**

"जनिकर्त्तुः प्रकृतिः" (अष्टा.२.४.३०) इति सूत्रमपादानसंज्ञाविधायकम् । तच्च फणीन्द्रेण महाभाष्यकृता प्रत्याख्यातं "ध्रुवमपायेऽपादानम्" (अष्टा.१.४.२४.) इति सूत्रेणैवाऽपादानसंज्ञासिद्धेः । अपाये विश्लेषे यद् ध्रुवमवधिभूतं ततः पञ्चमीति विश्लेषावधावेव सर्वत्र पञ्चमी । वृत्तौ 'पुत्रात्प्रमोदो जायत' इत्यनुपादाने पञ्चमीदर्शनात्प्रकृतिपदं हेतुमात्रपरमित्युक्तम् । न्यासेऽपीदमेवाश्रित्यासति प्रकृतिग्रहणे उपादानस्यैवापादानसंज्ञा स्यात् प्रत्यासत्तेः, नेतरस्य । प्रकृतिग्रहणात्कारणमात्रस्य भवतीति प्रकृति-

पदमनुपादानेऽप्यपादानसंज्ञासिद्ध्यर्थमित्युक्तम् । मृदः घटो जायत इत्यत्रापि बौद्धो विश्लेषोऽस्ति । एवं न क्वाप्युपादानार्थिका पञ्चमी । 'यतो वा इमानि भूतानि जायन्ते' (तै.उ.३.१) 'आकाशादेव समुत्पद्यन्ते' (छां.उ.१.९.१) इत्यादौ विश्लेषावधावेव पञ्चमीति ।। १८ ।।

(तदात्मानमेवाकरोत् इति श्रुतिव्याख्यानम्)

'तदात्मानमेवाकरोत्' इति श्रुतिं व्याख्याति - **आत्मन इति** ।

**आत्मनः करणं विष्णोराविर्भावो न चोदयः ।**
**निर्विकारगिरां कोपोऽन्यथाऽनीश्वरता तथा ।। १९ ।।**

तत्तत्कार्यनियामकरूपैराविर्भाव एवात्मनः स्वस्य करणम् । अन्यथा महदादिरूपेणात्मनः करणे निर्विकारश्रुतिविरोधः स्यात् । जगन्निरीश्वरं च स्यात् ।। १९ ।।

**आविर्भावस्वरूपां हि स्वयोनिं पार्थसारथिः ।**
**यादृशीमुक्तवानीशस्तादृशी प्रकृते जनिः ।। २० ।।**

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्" ।। (भ.गी.४.७)

इत्याविर्भावलक्षणां स्वस्य जनिं पार्थसारथिरुक्तवान् । प्रकृते "तदात्मानमेवाकरोत्" इति श्रुतौ तादृश्येव जनिर्न तु महदादिरूपेण भवनमित्यर्थः ।। २० ।।

(हरेर्बहुभवनं न परिणामित्वेन अपि त्वन्तर्यामित्वेन)

एकोऽहं बहु स्याम् इत्यन्तर्यामितयैव बहुभवनमित्याह - **अन्तरिति**।

**अन्तर्यामितया स्वस्य बहुभवनमिच्छता ।**
**सृज्यन्ते बहवो भावाः सत्यसङ्कल्पशालिना ।। २१ ।।**

अन्तर्यामितया स्वस्य बहुभावं सङ्कल्प्य महदादयः सृज्यन्त इत्यर्थः ।। २१ ।।

ननु स्वस्यानन्तरूपैर्बहुभावं सङ्कल्प्य 'इदं सर्वमसृजत' इति जगत्सर्जनानुपपत्तिस्तत्राह - **गुरुत्वमिति** ।

**गुरुत्वं स्वस्य सङ्कल्प्य शिष्यसम्पादनं गुरोः ।**
**यथा तथा विरोधो न सङ्कल्पस्य क्वचिद् विभोः ।। २२ ।।**

नियामकरूपैर्बहुभावस्य नियम्यसापेक्षत्वान्नियम्यं सृष्ट्वा नियामकरूपैः प्रवेशोपपत्तेः । यथा गुरुत्वसङ्कल्पेन शिष्यसर्जनं न विरुद्धं शिष्यसर्जनस्य गुरुत्वोपपादकत्वेन तत्सङ्कल्पविषयत्वात्तथा विश्वसर्जनस्य स्वीयानन्तरूपोपपादकत्वेन तस्यापि स्वीयानन्तरूपसङ्कल्पविषयत्वेन सङ्कल्पसर्जनयोर्वैयधिकरण्याभावात् ।। २२ ।।

**तात्पर्यनिर्णये बीजैरुपक्रमादिलिङ्गकैः ।**
**सिद्ध्येत्समन्वयो विष्णावार्षवाचां गुणालये ।। २३ ।।**

समन्वयाधिकरणोक्तरीत्योपक्रमादिलिङ्गैः शब्दतात्पर्यनिर्णायकैरार्षवाचां वेदानां विष्णावेव सम्यगन्वयो मुख्यवृत्त्या सिद्ध्यतीति सत्यानन्तगुणार्चिर्विष्णुर्मुमुक्षूणां ध्येयो ज्ञेयश्च सिद्ध्यति ।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।।
(ब्र.सू.भा.उ.बृहत्सं.व.१.१.४)

इत्यत्रोपक्रमोपसंहारयोरैकरूप्यमेकं लिङ्गमिति न लिङ्गानां सप्तत्वम् ।।२३

**(साकल्येन निर्वक्तुमशक्यत्वाददद्भुतत्वाच्च ब्रह्मावाच्यम्)**

ननु भवेद् ब्रह्मणि सर्वशब्दानां मुख्यवृत्त्या समन्वयो यदि वाच्यं

स्यात्तदेव तु न सम्भवति - 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुत्या तस्य वाच्यत्वनिषेधादित्याशङ्क्याह - **अवाच्यत्वमिति** ।

**अवाच्यत्वं परेशस्य साकल्याददद्भुतत्वतः ।**
**अवाच्यपदवाच्यत्वावाच्यत्वाभ्यां दृढं भवेत् ।। २४ ।।**

साकल्याददद्भुतत्वाच्चेशस्यावाच्यत्वम् । अवाच्यपदेन वाच्यं चेत्तेनैव वाच्यता । नो चेत्तदन्यशब्दैः सुतरां वाच्यता ।। २४ ।।

**माता वन्ध्या तथा मूकोऽहमिति स्यात् विरोधिता ।**
**वैयर्थ्यं ब्रह्मवाक्यानां वाच्यार्थशून्यता भवेत् ।। २५ ।।**

मम माता वन्ध्या' 'अहं मूक' इत्यादिकं यथा व्याहतं तथा 'यतो वाच' इत्यत्र यच्छब्देन वाच्यत्वे सर्वशब्दावाच्यत्वव्याहतिः, तदवाच्यत्वे ब्रह्मण औपनिषदस्य तदुद्दिश्य वाच्यत्वाभावविधानासम्भवेन व्याहतिः । "सत्यं ज्ञानमनन्तं ब्रह्म" (तै.उ.२.१.१) इत्यादिवाक्यानां वैयर्थ्यं स्यात् । न हि वाच्यार्थशून्यं वाक्यं पदं वा क्वचित्सार्थकं दृष्टं युक्तं वा ।। २५ ।।

**(लक्षणया ब्रह्मबोधकवाक्यानां निरर्थकत्वापादनम्)**

ननु शक्यार्थाभावेऽपि लक्षणया ब्रह्मवाक्यानां सार्थक्यं तत्राह - **वाच्यार्थेति** ।

**वाच्यार्थोज्झितशब्दानां लक्षणाऽपि न युज्यते ।**
**ब्रह्मादिपदलक्ष्यस्याब्रह्मत्वादिकमापतेत् ।। २६ ।।**

वाच्यार्थहीनानां शक्यसम्बन्धादिरूपलक्षणा न सम्भवति निरर्थकपद-घटितवाक्यं च निरर्थकं स्यात् ।। २६ ।।

ब्रह्मादिपदलक्ष्यस्याब्रह्मत्वादौ दृष्टान्तः - **अगङ्गादीति** ।

**अगङ्गादि यथा तीरं गङ्गादिपदलक्षितम् ।**
**अशक्यार्थागृहीतौ स्याल्लक्षणा हि वृथा गिराम् ।। २७ ।।**

यथा गङ्गादिपदलक्षितं तीरादिकं गङ्गादिभिन्नं भवति । तथा सत्यादिपदलक्षितं ब्रह्मासज्जडपरिच्छिन्नाब्रह्मादिकं स्यात् । ननु जहल्लक्षणायां भवेद्गङ्गादिपदलक्ष्यस्यागङ्गात्वादिकं प्रकृते तु जहदजहल्लक्षणाङ्गीकारान्नासत्यत्वाद्यापत्तिरित्यत आह - **अशक्येति** । लक्षणाजन्यबोधे शक्यादधिकस्यार्थस्यागृहीतावभाने लक्षणावैयर्थ्यम् । न हि घटपदस्य घट एव लक्षणा । 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र दध्युपघातकत्वेन लक्षणाऽपि काकत्वत्यागेन व्यक्तेर्लाभे भवति जहदजहत्स्वार्था, तत्र यथा दध्युपघातकत्वेन मार्जारादिव्यक्तिः भासते तथा लक्षणासार्थक्यायाब्रह्मासत्यत्वाद्यंशभानमावश्यकम् ।। २७ ।।

**(ब्रह्मणः वाच्यत्वे श्रुतिस्मृत्युदाहरणम्)**

"यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनकाशमस ङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखमगोत्रम नन्तरमबाह्यम् । न तदश्नाति किञ्चन" (बृ.उ. ३.८.४) इति श्रुतिम्,

'यदक्षरं वेदविदो वदन्ति' । (भ.गी.८.११)
'परं ब्रह्म परं धाम पवित्रं परमं भवान्
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा' ।। (भ.गी.१०.१२)

इत्यादिस्मृतिं चाक्षरस्य परब्रह्मणो वाच्यत्वं बोधयन्तीं सङ्गृह्णाति- **वाच्यत्वमिति** ।

**वाच्यत्वमक्षरस्याहुः श्रुतयः स्मृतयस्तथा ।**
**प्राकृतानां निषेधोऽत्र स्थौल्यादीनां हि कथ्यते ।।**
**अन्यथा प्रतिषिद्धं स्यात्सुखरूपत्वमात्मनः ।। २८ ।।**

प्राकृतवस्तुस्वभावानामेव स्थूलत्वादीनामक्षरे निषेधः। अन्यथा यथाश्रुतनिषेधाङ्गीकारे असुखमित्यनेन सुखरूपताया निषेधः स्यात् ।। २८ ।।

**ईक्षत्यधिकृतौ विष्णोरवाच्यत्वं निराकृतम् ।**
**श्रीबादरायणेनाद्धा तद्गुणानन्त्यलिप्सया ।। २९ ।।**

तस्य श्रीहरेर्गुणानामानन्त्यस्य लिप्सयाऽवाच्यत्वमीक्षत्यधिकरणे निराकृतम् । "ईक्षतेर्नाशब्दम्" (ब्र.सू.११.५) इति । ब्रह्म शब्दावाच्यं न ईक्षतेः । 'स तस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत' इति तद्विषयकेक्षणश्रवणात् । ईक्षणं त्वौपनिषदस्य शब्देनैव । तच्च ब्रह्मणः सर्वशब्दावाच्यत्वेऽनुपपन्नं स्यादिति हि तदधिकरणार्थः ।। २९ ।।

**(शुद्धं ब्रह्मैव मुमुक्षुध्येयं वाच्यं च)**

ननु विशिष्टं वाच्यं, शुद्धं लक्ष्यम् । तत्राह - **दर्शनमिति** ।

**दर्शनं ह्यात्मनः प्रोक्तं तज्ज्ञानादेव मोचनम् ।**
**तत्र हेयनिषेधाच्च वाच्यत्वं शुद्धचिद्गतम् ।। ३० ।।**

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ.उ.६.५.६) "ब्रह्मविद्ब्रह्मैव भवति" (मुण्डक.उ.४.३.९.) "तरति शोकमात्मवित्" (छां.उ.७.१.३)

"यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" ।।
(मुं.उ.३.१.३)

इति श्रुतिभिः,

शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्दिते ।
मैत्रेय भगवच्छब्दः सर्वकारणकारणम् ।।

इत्यादिस्मृत्या च शुद्धस्यैव ज्ञेयत्वमुक्तम् । न ह्यशुद्धज्ञानात् मोक्षो भवेत् । अतः शुद्धमेव ब्रह्म मुमुक्षुज्ञेयं ध्येयं वाच्यं चेति सिद्धम् ।।३०।।

**(चतुर्विधा अपि शब्दा विष्णुवाचकाः)**

**चतुर्विधगिरां विष्णौ समन्वयः प्रकीर्त्यते ।**
**आद्याध्यायेन वृत्त्या हि मुख्यया हरिणा स्फुटम् ।। ३१ ।।**

**चतुरिति** । हरिणा श्रीव्यासेनाद्येन समन्वयाध्यायेन मुख्यया वृत्त्या चतुर्विधशब्दानां विष्णौ समन्वयः प्रकीर्त्यते ।। ३१ ।।

चातुर्विध्यमाह - **तत्रेति** ।

**तत्रान्यत्रोभयत्रैव चान्यत्रैव प्रसिद्धकाः ।**
**विष्ण्वानन्दमयाधारबोधकाद्या रवाः स्मृताः ।। ३२ ।।**

तत्र हरौ प्रसिद्धा विष्णुनारायणादयः । तेषां सुप्रसिद्धत्वात्समन्वये यत्नो नापेक्षितः । अन्यत्रप्रसिद्धा अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाद्या रुद्रेन्द्रादि[1]देवताशब्दाः प्राणाकाशज्योतिर्गायत्र्याद्याश्च । सर्वगतत्वसर्वभक्षकत्वगुहाप्रविष्टत्वादित्यादिस्थत्वान्तर्यामित्वादृश्यत्वादिगुणकत्वादिबोधकाश्चान्यत्रप्रसिद्धाः । द्युभ्वाद्यायतनत्वभूमत्वाक्षरत्वादिबोधका उभयत्रप्रसिद्धाः । प्रधानादेर्ज्योतिष्टोमादिकर्मणां च वाचकाः प्रकृतिशून्य[2]बद्धाऽसदाद्याः अन्यत्रैवप्रसिद्धाः । अन्यत्रैव प्रसिद्धशब्दसमन्वयस्य चतुर्मुख एवोपासकः । अन्येषां समन्वयस्य यथायोग्यं सर्वे चिन्तकाः ।। ३२ ।।

---

१. देवताः । - क.  २. बद्धाः सदाद्याः - क.

(अन्यत्रप्रसिद्धशब्दलक्षणम्)

अन्यत्रप्रसिद्धानां लक्षणमाह - **येषामिति** ।

**येषां ब्रह्मण्यप्रसिद्धिः प्रसिद्धिश्चाऽन्यवस्तुषु ।**
**विरोधिन्यौ हि तेऽन्यत्र प्रसिद्धाः कथिता इह ।। ३३ ।।**

अन्नमयादीनां मयडन्तानां निर्विकारे ब्रह्मणि लोकतोऽप्रसिद्धिः, सविकारे वस्त्वन्तरे प्रसिद्धिश्च - हरौ समन्वयस्य विरोधिनीति तेऽन्यत्र-प्रसिद्धाः ।। ३३ ।।

(उभयत्रप्रसिद्धशब्दलक्षणम्)

**येषां प्रसिद्धिरन्यत्र केवलैव विरोधिनी ।**
**समन्वयस्योभयत्रप्रसिद्धास्ते प्रकीर्त्तिताः ।। ३४ ।।**

द्युभ्वाद्यायतनत्वादिबोधका 'रुद्रो वा व लोकाधारः' 'प्राणानां ग्रन्थि-रसि रुद्रः' (महा.ना.उ.३.५) 'भूतञ्च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतम्' 'वायुना वै गौतम सूत्रेणायञ्च लोकःपरश्च लोकःसर्वाणि च भूतानि संदृब्धानि' (बृ.उ.३.७.२) इत्याद्याः समाख्यानादिनाऽन्यत्रप्र-सिद्धाः । 'लोकाश्च लोकिनश्च विष्णावेवौताश्च प्रोताश्च' इत्याद्याः श्रुतयः

'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' । (भ.गी.)

इत्याद्याः स्मृतयश्च विष्णौ द्युभ्वाद्यायतनत्वबोधिकाः प्रसिद्धाः ।। ३४ ।।

(अन्यत्रैव प्रसिद्धशब्दलक्षणम्)

**येषामुक्तद्वयं ब्रह्मपरत्वस्याऽत्यशक्यता ।**
**इति तिस्रो विरोधिन्यस्तेन्यत्रैव प्रसिद्धकाः ।। ३५ ।।**

येषां शब्दानां ब्रह्मान्यत्र लोकात् श्रुत्या च प्रसिद्धिर्ब्रह्मणि चात्यप्र-सिद्धिः समन्वयविरोधिनी तेऽन्यत्रैव प्रसिद्धाः प्रधानबुद्ध्यादयः ।। ३५ ।।

सङ्क्षेपेण समन्वयप्रकारं वक्तुमन्नमयादीनां तावत् तमाह - **अन्नमय इति** ।

**अन्नमयः स एवाऽस्ति तथा प्राणमयो हरिः ।**
**मनोमयोऽपि सर्वेशो हि विज्ञानमयस्तथा ।। ३६ ।।**

स हरिरेवान्नमयादिरूपः ।। ३६ ।।

**(ब्रह्मशब्दादन्नमयादयः ब्रह्मैव)**

अन्नमयादीनां ब्रह्मत्वे हेतुमाह - **स इत्यादिना** ।

**स आनन्दमयोऽप्यस्ति ब्रह्मशब्दप्रयोगतः ।**
**मुक्तप्राप्यत्वमन्नादेरेवं हि सूपपद्यते ।। ३७ ।।**

'येऽन्नं ब्रह्मोपासते' (तै.उ.२.२) 'ये प्राणं ब्रह्मोपासते' (तै.उ.२.३) 'आनन्दं ब्रह्मणो विद्वान्' (तै.उ.२.४) 'विज्ञानं ब्रह्म चेद्वेद' (तै.उ.२.५) इत्याद्यन्नमयादिविषयतया ब्रह्मशब्दसमभिव्याहारादन्नमयादयो ब्रह्मैव । न चाऽन्नं ब्रह्मेत्यन्नादीनां ब्रह्मशब्दसमभिव्याहारादस्तु ब्रह्मत्वम् । अन्नमयादीनां च तदभावात्कथं तत्त्वमिति वाच्यम् । यथा हि ज्योतिष्टोमाधिकारे 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यत्र ज्योतिःपदमेव ज्योतिष्टोमाभ्यासकालपरं, तथाऽन्नमयाद्यधिकारे पठितमभ्यस्यमानं ब्रह्मविधानपरम् । तथा चैतमन्नमयमात्मानमुपसंक्रम्येत्यन्नमयादेर्मुक्तप्राप्यत्वादन्नमयादिकं लक्ष्यत इत्यर्थः । "आनन्दमयोऽभ्यासात्" (ब्र.सू.१.१.१२) इति सूत्रे चानन्दमयपदमन्नमयाद्युपलक्षकम् । "स यश्चायं पुरुषे यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसंङ्क्रम्य । एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नीकामरूप्यनुसञ्चरन् । एतत्साम

गायन्नास्ते" (तै.उ.३.१४) इति ब्रह्मविदोऽन्नमयादिप्राप्तिरेषा ब्रह्मत्वे सूपपन्ना भवेत् । न हि ब्रह्मविदोऽब्रह्मप्राप्तिर्युक्ता ।। ३७ ।।

**(नान्नमय इत्यादौ विकारार्थे मयट्)**

ननु विकारार्थकमयडन्तैः कथं ब्रह्म वाच्यं तत्र योगरूढ्योरभावाच्चेत्यत आह - **प्राचुर्य इति** ।

**प्राचुर्ये मयडत्रास्ति न विकारार्थकः क्वचित् ।**
**अन्नत्वमुपजीव्यत्वाद्भक्षयितृत्वतो हरेः ।। ३८ ।।**

**प्राचुर्य इति** । प्राचुर्य एवात्र मयट्, न विकारे । अन्यथा बह्वच्काभ्यां विज्ञानानन्दप्रातिपदिकाभ्यां विकारार्थकमयडनुपपत्तेः । "मयड् वैतयोर्भाषायाम्" इति लोक एव विकारार्थकमयड्विधानात् **"द्व्यचश्छन्दसि"** (अष्टा.५.३.१५०) इत्यनेन द्व्यच्कादेव विकारार्थकमयड्विधानात् । ततोऽर्थान्तरे मयडङ्गीकारे वैरूप्यापत्तेः ।

"अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते" (तै.उ.२.५.)इति श्रुत्या सर्वभूतोपजीव्यत्वरूपाद्यत्वं सर्वभूतसंहर्तृत्वरूपात्तृत्वमीश्वरलिङ्गमन्नमयस्योक्तम् ।। ३८ ।।

**प्राणत्वं चेष्टकत्वेन ज्ञानत्वं बोधरूपतः ।**
**परमानन्दरूपत्वादानन्दत्वं हरेः परम् ।। ३९ ।।**

परमिति सर्वत्रान्वयि । प्राणयति चेष्टयतीति सर्वचेष्टकत्वलक्षणप्राणयितृत्वप्राचुर्यं हरावेव । ज्ञानानन्दप्राचुर्यं भूयस्त्वलक्षणं तत्रैव ।। ३९ ।।

ननु यथा 'ब्राह्मणमयो ग्राम' इत्यादौ ब्राह्मणानां प्राचुर्यप्रतियोगिनोऽल्पा अब्राह्मणा अपि लभ्यन्ते तथाऽऽनन्दप्राचुर्यप्रतियोग्यनानन्दस्यापि प्रसङ्ग इत्यत आह - **सजातीयेति** ।

**सजातीयप्रकाशाद्धि प्रचुरत्वविवक्षया ।**
**प्रकाशप्रचुरः सूर्य इति व्यवहृतिर्यथा ।।**
**जीवसुखाद्यपेक्ष्यैव सुखादिप्रचुरो हरिः ।। ४० ।।**

यथा सजातीयव्यधिकरणचन्द्रादिनिष्ठप्रकाशात्प्राचुर्याभिप्रायेण प्रकाशमयः सूर्य इति व्यवह्रियते, न तु सूर्यनिष्ठान्धकारापेक्षया, तस्य तत्राऽसत्वात्, तथा सजातीयव्यधिकरणजीवनिष्ठानन्दापेक्षया ब्रह्मण्यानन्दप्राचुर्यं, न तु तन्निष्ठानानन्दापेक्षया, तस्य तत्रासत्वादित्यर्थः ।। ४० ।।

**(अन्नादीनां ब्रह्मत्वे पुनरुपसर्पणसार्थक्यनिरूपम्)**

ननु पञ्चानां ब्रह्मत्वे सकृत्प्रश्नोत्तरेणैव तस्य ज्ञातत्वादधीहि भगवो ब्रह्मेति पुनः प्रश्नोत्तरवैयर्थ्यं स्यादत आह - **अन्नत्वादीति** ।

**अन्नत्वादिगुणान् ध्यातुं साक्षात्कर्त्तुं पुनः पुनः ।**
**पञ्चवारं गुरुः पृष्टो दत्तं तेन तथोत्तरम् ।। ४१ ।।**

भृगुणा 'अधीहि भगवो ब्रह्म' (तै.उ.३.१) इति गुरुर्वरुणः पृष्टः 'अन्नं ब्रह्मेति व्यजानात्' (तै.उ.३.२) इति गुरुरुत्तरितवान् । तद्रूपमन्नत्वादिगुणविशिष्टं ध्यात्वा साक्षात्कृत्य प्राणमयादिरूपाणां तद्गुणविशिष्टानां ज्ञानार्थं पुनश्चतुर्वारं गुरुः पृष्टस्तेन तथैवोत्तरं च दत्तम् । अतो यत्किञ्चिद्गुणविशिष्टहरिस्वरूपज्ञानस्याद्योपदेशेनैवोत्पत्तावपि गुणान्तरावगत्यर्थं पुनः पुनः प्रश्नोत्तरयोः सार्थक्यम् ।। ४१ ।।

**(पञ्चकोशानामन्यत्वादान्तरत्वात्तन्नियामकभगवद्रूपाणामपि तथा व्यवहारः)**

ननु "तस्माद्वा एतस्मादन्नमयादन्योऽन्तर आत्मा प्राणमयः । तस्माद्वा एतस्मादन्योऽन्तर आत्मा मनोमयः । तस्माद्वा एतस्मादन्योऽन्तर आत्मा विज्ञानमयः तस्माद्वा एतस्मादन्योऽन्तर आत्माऽऽनन्दमयः" (        )

इत्युक्तमन्यत्वान्तरत्वादिकमेकस्मिन् स्वगतभेदहीने ब्रह्मणि कथं युज्यतेत्यत आह - **अन्यत्वेति** ।

**अन्यत्वान्तरत्वाद्यं हि कोशानां विद्यते ततः ।**
**तन्नियामकरूपाणां पञ्चानां व्यपदिश्यते ।। ४२ ।।**

'अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमयमात्मा मे शुद्ध्यन्ताम्' इति श्रुत्युक्तानां पञ्चानां कोशानामन्यत्वान्तरत्वात्तन्नियामकभगवद्रूपाणां तथा व्यवहारः । यथा तैत्तिरीयोक्तान्नमयादीनां ब्रह्मशब्दसमभिव्याहारमुक्तप्राप्यत्वादिकमीश्वरलिङ्गमस्ति तथा श्रुत्यन्तरोक्तानां तेषां तन्नास्ति । प्रत्युत शुद्धिप्रार्थनारूपमनीश्वरलिङ्गमस्तीति ते कोशाः तन्नियामको हरिरप्येकरूपोऽचिन्त्यशक्त्या पञ्चधा व्यवह्रियते । तत्राऽन्नमयः स्थूलदेहादिः । प्राणमयः प्राणेन्द्रियादिः । मनोमयः सङ्कल्पविकल्पादिवृत्तिविशिष्टं मनः । विज्ञानमयोऽध्यवसायादिरूपवृत्तिविशिष्टा बुद्धिः । आनन्दमयः सम्प्रज्ञातसमाधिस्थायिसुखैकवृत्युपेतं चित्तमिति विवेकः । अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवनारायणरूपैरन्नमयतयोच्यतेऽचिन्त्यशक्तिर्हरिरित्याकरे स्फुटम् ।। ४२ ।।

उक्तार्थे भारतसम्मतिमाह - **अनिरुद्धदीति** ।

**अनिरुद्धादिमूर्त्तीनामभिन्नानां परस्परम् ।**
**परापरत्वमप्युक्तं तथैव प्रकृते भवेत् ।। ४३ ।।**

मुक्तिं गच्छन्तः सूर्यादूर्ध्वमनिरुद्धं प्राप्नुवन्ति । ततः प्रद्युम्नं ततः सङ्कर्षणं ततो वासुदेवमित्यर्थकभारतवाक्यान्युदाहृतानि प्राक्। यथैकस्याऽनिरुद्धादिरूपेण परत्वादिकमचिन्त्यशक्त्या तथा प्रकृतेऽपीत्यर्थः ।। ४३ ।।

(महायोगादिना हरिस्सकलशब्दवाच्यः)

**महायोगादिना सर्वे शब्दा वदन्ति माधवम् ।**
**मुख्यतोऽन्यपदार्थांश्च व्यवहर्त्तुममुख्यतः ।। ४४ ।।**

आ समन्तात्काशते प्रकाशत इत्याकाशो हरिः । वशब्दो बलवाची आयुरिति ज्ञानम् । अयतेर्गत्यर्थत्वात् ये गत्यर्थास्ते ज्ञानार्थाः । वश्चासावायुश्च वायुर्बलज्ञानरूपो हरिः । न गच्छति स्वतो न प्रवर्त्तते इत्यगं विश्वम् । अगशब्दे कर्मण्युपपदे नयतेः क्विप् । बहुलत्वात् नीयोगे उपपदेऽलोपः । धातोश्च ह्रस्वता निर्वचनत्वात् अग्निः । आप्नोतीत्यापः सर्वव्यापक इत्यर्थः । बहुवचनम् अन्तर्यामित्वादिना बहुरूपाभिप्रायेण । प्रथयति विस्तारयतीति पृथिवी । जठराग्निनोष्टा दग्धा ओषाः । [1]कर्मणि घञ् तान् दधातीत्योषधिः । भुक्तस्य परिणतस्य चान्नस्य सर्वनाडीषु धारक इत्यर्थः । अन्नपदं व्याख्यातं प्राक् । पुरुषशब्दस्तु हरौ सुप्रसिद्ध एव ।

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात्पुरुषः' (तै.उ.२.२) इति श्रुत्युक्ताकाशादिकं चतुर्विधम् । तथाहि भूतं भूताभिमानी तच्छरीरं तदन्तर्यामी चेति चतुष्टयमाकाशपदवाच्यम् । एवं चतुर्विधादाकाशाच्चतुर्विधो वायुस्ततश्चतुर्विधं तेजस्ततश्चतुर्विधं जलं ततश्चतुर्विधा पृथिवी ततश्चतुर्विधा ओषधीः । ततश्चतुर्विधमन्नं ततः शरीरं तदभिमानी तदन्तर्यामी चेति त्रिविधः पुरुषः । हरेः सर्वत्र कार्ये अन्तर्यामितयाऽऽविर्भाव एव । न त्वन्येषामिवावस्थान्तरप्राप्तिरूपा पराधीनविशेषावाप्तिरूपा चोत्पत्तिः । निर्विकारत्वात्पूर्णत्वात्स्वतन्त्रत्वाच्च । एवं ब्रह्मातिरिक्तजडानां

---

१. कर्मणि घञन्तात् दधत्योषधीः । - क.

स्वरूपेणैवोत्पत्तिर्जीवानां देहलाभरूपोत्पत्तिर्लक्ष्म्यादीनां प्रकृत्याद्यभिमानित्वादिरूपपराधीनविशेषावाप्तिरूपोत्पत्तिरिति हरिभिन्नस्य सर्वस्य कार्यत्वात्तन्नियामकतयाऽऽविर्भूतो हरिरपि तत्तत्पदैर्वाच्य इति सिद्धम् ।। ४४ ।।

**प्रसिद्धा अधिदेवादौ लोक इन्द्रादयो रवाः ।**
**पौष्कल्यात्ते निमित्तानां मुख्यतो हरिवाचकाः ।। ४५ ।।**

इन्द्राद्यधिदेवतावाचकतया ये लोके प्रसिद्धाः शब्दास्ते मुख्यतया हरिमेव वदन्ति । प्रवृत्तिनिमित्तानां परमैश्वर्यादीनां तत्र पौष्कल्यात् । अल्पज्ञाद्बहुज्ञे विद्वच्छब्दस्य मण्डलाधिपात्सार्वभौमे भूपशब्दस्य मुख्यत्वं हि दृष्टम् ।। ४५ ।।

**(अमुख्यवृत्त्या अन्ये शब्दवाच्याः)**

**अध्यात्मादिरवा विष्णुं मुख्यतः प्रवदन्ति हि ।**
**छन्दोवाचस्तथा प्राहुर्गायत्र्याद्या महेश्वरम् ।। ४६ ।।**

अध्यात्मादिशब्दाः प्राणादिषु लोकतः प्रसिद्धाः तेऽपि मुख्यतो विष्णुं वदन्ति । प्रवृत्तिनिमित्तस्य तत्र पौष्कल्यात् । "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमुत मनसो मनः" (बृ.उ.४.४.१८) इति श्रुत्या प्राणादीनां प्राणदत्वादेर्हरावेवोक्तेः । 'गायत्री वा इदं सर्वम्' (छां.उ.३.१२.१) इत्यादिशब्दाल्लोकतश्छन्दसि प्रसिद्धाः मुख्यतया हरिं वदन्ति । गानत्राणकर्तृत्वस्य प्रवृत्तिनिमित्तस्य तत्रैवोपदेष्टरि पालके च मुख्यत्वात् । 'गायति त्रायति च' (छां.उ.३.१२.१) इति श्रुतेश्च ।। ४६ ।।

**(हरिः सर्वव्यापकः)**

'सर्वत्र प्रसिद्धोपदेशात्' (ब्र.सू.१.२.१) इत्याद्यधिकरणेन प्रतिपाद्यं सर्वव्यापकं हरिमाह - **सर्वत्रेति** ।

**सर्वत्र प्रथितो विष्णुर्वेदान्तेष्वितिहासके ।**
**पुराणादौ तथोदितः सर्वव्यापक ईश्वरः ।। ४७ ।।**

"तदेव ब्रह्म परमं कवीनाम्" (म.ना.उ.२.६) इति श्रुतेः ।
'परं ब्रह्म परं धाम पवित्रं परमं भवान्' । (भ.गी.१०.१२)

इति इतिहासाच्च ।।

'यत्र देवा न मुनयो न चाहं न च शङ्करः ।
जानन्ति देवदेवस्य तद्विष्णोः परमं पदम्' ।।

इति पुराणाच्च ।। ४७ ।।

'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यव एतं महाव्रते छान्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतञ्चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' (ऐत.उ.२.८.७) इत्यैतरेयश्रुत्युक्तं सर्वव्यापकं हरिमाह - **मीमांसत इति** ।

**मीमांसन्ते सदोक्थेष्वेतं बह्वृचाश्च याजुषाः ।**
**अग्नौ वै सामगा एतं दिवि वायौ तथा हरिम् ।। ४८ ।।**

बह्वृचा ऋग्वेदिनः याजुषा यजुर्वेदिनः उक्थादिषु मीमांसन्ते विचारयन्ति ।। ४८ ।।

तस्य सर्वव्याप्तिमाह - **आकाश इति** ।

**आकाशे चौतमोषध्यां हि वनस्पतिचन्द्रयोः ।**
**नक्षत्रेषु तथैतं हि सर्वभूतेषु सर्वदा ।। ४९ ।।**

सर्वभूतेष्वेतं व्यापकतयाऽन्तर्यामितया च वर्त्तमानं ब्रह्मेत्याचक्षत इत्यर्थः ।

सर्वस्य चाहं हृदि सन्निविष्टः । (भ.गी.१५.१५)
सर्वभूतस्थितं यो माम् । (भ.गी.६.३१) इत्यादि -
स्मृतेश्च ।। ४९ ।।

"स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तर पुरुषः" (ऐ.उ.२.४.८) इत्यादिश्रुतिप्रतिपाद्यमश्रुतत्वाद्यनन्तगुणालयं हरिस्वरूपमाह - **अश्रुतत्वादिकैरिति** ।

**अश्रुतत्वादिकैर्धर्मैः सर्वद्रष्टृत्वमुख्यकैः ।**
**सर्वान्तर्गततताद्यैश्च युक्तो जीवेतरो हरिः ।। ५० ।।**

जीवादिष्वसम्भावितैः साकल्येनाश्रुतत्वाविज्ञाततत्वाद्यैः सर्वभूतान्तःस्थत्वाद्यैश्च धर्मैर्युक्तो हरिर्जीवादितरो भिन्नो यस्मात्स एवंभूतो मुमुक्षुज्ञेयः ।। ५० ।।

हरेः सर्वव्यापकतायां स्मृतिमप्युदाहरति - **अहमिति** ।

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**गामाविश्य च भूतानि धारयाम्यहमोजसा ।। ५१ ।।**

सर्वभूताशयस्थितः सर्वहृद्गतः[1] ।। ५१ ।।

**(य एषोऽन्तरादित्य इति श्रुतिव्याख्यानम्)**

"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी (छां.उ.१.३.७) य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म" (छां.उ. ८.२.४) इत्यादि श्रुतिं संगृह्णाति - **आदित्येति**

---

१.इदं वाक्यं क कोशेऽस्ति ।

**आदित्यादौ सदा विष्णुर्दृश्यते गुणसागरः ।**
**प्रकाशात्मककेशादिः प्राकृतास्पृष्टविग्रहः ।। ५२ ।।**

आदित्यादिषु वर्त्तमानस्तत्प्रसादयुतैर्दृश्यते ।

'ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः' ।। (नरसिंहपुराणम्) इति -

स्मृत्या पुण्डरीकाक्षसमाख्ययाऽऽदित्यस्थस्य विष्णुत्वनिर्णयः । कं जलं पिबतीति कपिः नालं तदेवासनं यस्य तत्कप्यासं जलनाले विद्यमानं ततोऽविच्छिन्नं प्रफुल्लं पुण्डरीकं रक्ताम्भोजं यथा तद्वदक्षिणी यस्य । हिरण्यवत् स्पृहणीयाः केशादयः यस्य । न तु प्राकृततैजसः । तमसः परस्तात्' इति तमःशब्दवाच्यप्रकृतेः सदा परत्वोक्तेः ।

'सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।
समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्' । इत्यादि-
स्मृतेश्चेत्याह । प्राकृतैः सदाऽस्पृष्टो विग्रहो यस्य सः ।। ५२ ।।

**(अन्तर्यामिब्राह्मणसारः)**

अन्तर्यामिब्राह्मणार्थमाह - **अन्तर्यामीति** ।

**अन्तर्यामिगिरो विष्णुं जडजीवविलक्षणम् ।**
**तन्नियन्तृत्वतश्चाहुस्तदज्ञेयत्वतस्तथा ।। ५३ ।।**

"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति । य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त

आत्माऽन्तर्याम्यमृतः । यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरम्" (बृ.उ.५.७.१३) इत्यन्तर्यामिब्राह्मणेन जडजीवनियामकतया तदज्ञेयतया च ततोऽत्यन्तविलक्षणः सर्वोत्तमः सर्वान्तर्यामी मुमुक्षुज्ञेयो हरिः प्रतिपादितः ।। ५३ ।।

**(यत्तदद्रेश्यमिति श्रुतिव्याख्यानम्)**

"अथ परा यया तदक्षरमधिगम्यते"

"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः"

"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्" ।।

(मुं.उ.१.३)

इति श्रुतिं व्याख्याति - **अदृश्यत्वमिति** ।

**अदृश्यत्वं हि साकल्यादवर्णत्वमनेत्रता ।**
**अपाणिपादता विष्णोः प्राकृतांशविवर्जनात् ।। ५४ ।।**

यथाश्रुतादृश्यत्वे परिपश्यन्तीति विरोधः स्यात् । अपाणिपादस्याशरीरस्योर्णनाभिवत्सर्जनानुपपत्तिश्च । अतः प्राकृतनामरूपादिरहितोऽप्राकृतानन्तगुणो हरिः सिद्धः ।। ५४ ।।

**महातात्पर्यतो विष्णुर्यदा वेदेन बोध्यते ।**
**तदा विद्या परा सा स्यादपरा त्वन्यबोधने ।। ५५ ।।**

यदा समस्तो वेदो मुख्यतात्पर्यतो विष्णुं बोधयति तदा तस्यैव परविद्यात्वम् । यदा तु तदन्यकर्मादिकं बोधयति तदा तस्यैवापरविद्यात्वम् ।

विषयपरत्वापरत्वाभ्यामेवैकस्यैव वेदस्य परविद्यात्वापरविद्यात्वे स्यातां न तु ग्रन्थभेदेन ।। ५५ ।।

**(द्युभ्वाद्यधिकरणतात्पर्यम्)**

द्युभ्वाद्यधिकरणार्थमाह - **द्युभ्वेति** ।

**द्युभ्याद्यायतनो विष्णुर्मुक्तप्राप्योऽखिलेश्वरः ।**
**जीवादिभ्यः सदा भिन्नः सत्यानन्तगुणालयः ।। ५६ ।।**

"अमृतस्यैष सेतुः" (मुं.उ.२.२.५) "ब्रह्मविदाप्नोति परम्" (तै.उ.वल्ली.२.८) "एतमानन्दमयमात्मानमुपसङ्क्रामति" (तै.उ.) इत्यादिश्रुतिभिः "मुक्तोपसृप्यव्यपदेशात्" (ब्र.सू.१.३.२) इति सूत्रेण च

'बहवो ज्ञानतपसा पूता मद्भावमागताः' ।
'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' ।।
'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' ।
ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।।
समाहितमनस्काश्च नियताः संयतेन्द्रियाः ।
एकान्तभावोपगता वासुदेवं विशन्ति ते' ।
इत्यादिस्मृतिभिश्च विष्णोर्मुक्तप्राप्यत्वमुक्तम् ।। ५६ ।।

विष्णोर्विश्वायतनत्वे स्मृतिमुदाहरति - **यत्रेति** ।

**यत्रोतमेतत्प्रोतञ्च विश्वमक्षरसंज्ञके ।**
**आधारः सर्वभूतानां स प्रसीदतु मे हरिः ।। ५७ ।।**

यथा कन्थौतप्रोतसूत्रैर्ध्रियते तथा हरिणेदं विश्वं धृतमित्यर्थः ।।५७।।

**यस्मिन्नित्ये ततेऽनन्ते दृढे स्रगिव तिष्ठति ।**
**सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि ।। ५८ ।।**

तते व्याप्ते अनन्ते देशकालगुणापरिच्छिन्ने दृढे अचिन्त्यानन्तशक्तिमति विश्वमङ्गे एकदेशे यस्य । विश्वव्याप्तं कर्म यस्य । विश्वेषां सर्वेषां कर्म चेष्टा यत्रेति वा ।। ५८ ।।

**यस्मिन् भूतानि विश्वानि तिष्ठन्ति च विशन्ति च ।**
**गुणभूतानि भूतेशे सूत्रे मणिगणा इव ।। ५९ ।।**

प्रलये मुक्तौ विशन्तीत्यर्थः ।। ५९ ।।

**बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या ।**
**चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ।। ६० ।।**

चतुर्विधं जरायुजस्वेदजाण्डजोद्भिज्ज्ररूपम् ।। ६० ।।

**(रुद्रो न विश्वाधारः)**

ननु 'रुद्रो लोकाधारः', 'प्राणानां ग्रन्थिरसि रुद्रः' (म.ना.उ.३५) इत्यादिना रुद्रादेरपि विश्वाधारत्वोक्तेः कथं विष्णोरेव तदित्याद्याशङ्कां श्रुत्यर्थनिर्णायकैर्भारतादिवाक्यैः परिहृताऽपि ब्रह्माण्डपुराणीयनिरुक्त्या परिहरति - **रुजमित्यादिना** ।

**रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः ।**
**ईशनादेव चेशानो महादेवो महत्त्वतः ।। ६१ ।।**

रुजमाश्रितानां व्यथाम् ।। ६१ ।।

**पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात् ।**
**तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ।। ६२ ।।**

नाकं दुःखासम्भिन्नसुखं ये मुक्ताः पिबन्ति ते विद्यन्ते यस्मिन् स मुक्तानामाधारः ।। ६२ ।।

**शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः ।**
**कृत्त्यात्मकमिदं देहं यतो वस्ते प्रवर्त्तयन् ।। ६३ ।।**

शंरोधनाद्दैत्यादीनां सुखस्य विघटनादित्यर्थः । देहं जीवानामिति शेषः । कृत्तिवासास्तत इत्युत्तरेणाऽन्वयः ।। ६३ ।।

**कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात् ।**
**बृहद्गुणत्वाद्ब्रह्माऽसावैश्वर्यादिन्द्र इत्यपि ।। ६४ ।।**

**एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः ।**
**वेदेषु च पुराणेषु गीयते पुरुषोत्तमः ।। ६५ ।।**

विरेचनात्प्रवर्त्तनात् ।। ६४ ।। ६५ ।।

**(नान्यदतोऽस्ति द्रष्टृ इति श्रुत्यर्थवर्णनम्)**

'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ.उ.५.८.११) इत्यादिश्रुत्यर्थमाह - **साकल्य इति** ।

**साकल्येन हरिर्द्रष्टा नान्यस्तथाविधोऽपरः ।**
**अदृश्योऽपि प्रमाणैः स साकल्येन जनार्दनः ।। ६६ ।।**

सर्वेषां वस्तूनां साकल्येन सर्वप्रकारेण द्रष्टा हरिरेव । ततोऽन्यत्तादृशं द्रष्ट्रादिकं नास्तीति तत्तुल्यद्रष्ट्रादीनामेव निषेधो, न तु द्रष्ट्रादिमात्रस्य । "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" (५.३.३.३) । "ब्रह्मविदाप्नोति परम्" (तै.उ.२.१) इत्यादि श्रुतिभिः

'पश्य मे पार्थ रूपाणि' । (भ.गी.११.५)

ज्ञातुं द्रष्टुं च तत्त्वेन । (भ.गी.११.५४)

ततो मां तत्त्वतो ज्ञात्वा । (भ.गी.१८.५५)

इत्यादिस्मृतिभिश्च विरोधापत्तेः । अत एवादृष्टत्वमपि तस्य साकल्येनैव । अन्यथा "दृश्यते त्वग्र्या बुद्ध्या" (का.उ.२.१.१२) इत्यादिश्रुतिविरोधापत्तेः ।। ६६ ।।

**(दहराधिकरणसारः)**

दहराधिकरणार्थमाह - **दहर इति** ।

**दहरे हृदयाकाशे वर्त्तते विश्वसंश्रयः ।**
**मुमुक्षूपास्यपादाब्जः सत्यसङ्कल्प ईश्वरः ।। ६७ ।।**

सूक्ष्मे 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्यम्' इति तं चेत् ब्रूयुः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वा व विजिज्ञासितव्यमिति । स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च । एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्ल्पः । सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" (छां.उ.८.१.३) इति श्रुतेः । यो भगवानन्वेष्टव्यस्तस्यान्तर्हृदये यावान्वा अयमाकाशस्तावानाकाशस्तस्मिन् द्यावापृथिवी अन्तरेव समाहिते स च भगवानपहतपाप्मेत्यन्वयः । अयं भावः - शरीरपुण्डरीकयोः ब्रह्म प्रति पुरत्ववेश्मत्वोक्त्यैवान्वेष्टव्यस्य ब्रह्मत्वसिद्धेः तस्मिन्यदन्तरित्यत्र हृत्पद्मस्थाकाशगतं ब्रह्मान्वेष्टव्यमित्युक्ते किं तदित्यत्र तद्ब्रह्म किंप्रकारकमिति पृष्टे यावानिति परिहारवाक्ये यद्ब्रह्मान्वेष्टव्यतयोक्तं तस्यान्तर्हृदये यावानेष आकाशस्तावान् सर्वो विद्यते द्यावापृथिव्यादिकं चाऽस्मिन् समाहितमिति ब्रह्मण आकाशादिसर्वाश्रयत्वापहतपाप्मत्वादिप्रकार उक्तः । "य एषोऽन्तर्हृदये आका-

शस्तस्मिन् शेते सर्वस्य वशी एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" (छा.उ.८.४.१) इति श्रुत्या हृत्पद्मस्थस्येश्वरत्वमुक्तम् ।

'सर्वस्य चाहं हृदि सन्निविष्टः' । (भ.गी.१५.१५)

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' । (भ.गी.१०.२०)

इति स्मृत्या च तस्य विष्णुत्वनिर्णयः ।। ६७ ।।

**(यतश्शब्दाः विष्णौ योगवृत्तय अतः स सर्वशब्दवाच्यः)**

"सर्वे वेदा यत्पदमामनन्ति" (क.उ.२.२५) इत्यागमोक्तसर्वशब्दवाच्यत्वेन हरेर्गुणानन्त्यं सिद्ध्यतीत्याशयेनाह - **आकाशादीति** ।

**आकाशादिपृथिव्यन्तकार्येष्वाविर्भवन् विभुः ।**
**तत्तच्छब्दाभिधेयः स्यान्न तु सर्वस्वरूपतः ।। ६८ ।।**

आकाशादिकार्येषु तन्नियामकरूपैराविर्भवन्नाकाशादिपदवाच्यो भवति । न त्वाकाशादिस्वरूपत्वात्तत्पदवाच्यो जडत्वाद्यापत्तेः ।। ६८ ।।

न केवलं जडनियामकतया तत्पदवाच्यो हरिरपि तु चेतननियामकतया तत्तत्पदवाच्यो भवतीत्याह - **रुद्रेति** ।

**रुद्रेन्द्रादिपदार्थोऽपि भवेत्ततो हरिः सदा ।**
**सर्वशब्दाभिधेयोऽपि सर्वनियामकत्वतः ।। ६९ ।।**

ततो रुद्रादिनियामकत्वाद्रुद्रादिपदवाच्यो हरिः सर्वनियामकत्वात्सर्वशब्दवाच्यः ।। ६९ ।।

यत्प्रवृत्तिनिमित्तं यदधीनं स तत्पदवाच्य इत्यर्थं सदृष्टान्तमुपपादयति - **सैन्यकेष्विति** ।

**सैन्यकेषु जये जाते राजा जयीति भण्यते ।**
**निमित्ततादधीन्यं हि शब्दवृत्तिप्रयोजकम्[1] ।। ७० ।।**

प्रवृत्तिनिमित्तस्य जयस्य राजाधीनत्वात् राजा जयीति लोके व्यवह्रियतेऽतो निमित्तस्य तादधीन्यमपि शब्दप्रयोजकम् ।। ७० ।।

**रूढिर्योगो महायोगो विद्वद्रूढिस्तथा क्वचित् ।**
**निमित्तं सर्वशब्दानां समन्वये हरौ स्फुटम् ।। ७१ ।।**

रूढिरन्यत्र रुद्रादिशब्दानाम् । हरौ 'रुद्रो बहुशिरा बभ्रुः' इत्यादि विद्वद्रूढिः । अन्यत्र योगो, हरौ महायोगः । प्रवृत्तिनिमित्तस्य पौष्कल्यात् । केषाञ्चिन्नारायणविष्णुमुकुन्दादिशब्दानां हरावेव योगो रूढिश्च ।।७१।।

ननु शत्रुमारके बन्धके च राज्ञि राजा मृतो बद्ध इति प्रयोगापत्तिः । तत्पदप्रवृत्तिनिमित्तस्य शत्रुमरणबन्धनादे राजाधीनत्वात्तत्राह - **दृष्ट्वेति** ।

**दृष्ट्वा वृत्तिं हि शब्दानां निमित्तं कल्प्यते तथा ।**
**नाऽतो हि मारके राज्ञि मृतादिशब्दसञ्ज्ञनम् ।। ७२ ।।**

तद्गतत्वयोग्यत्वे सति यद्दोषत्वं तद्रहितं प्रति स्वातन्त्र्यं शब्दप्रवृत्तौ निमित्तम् । कार्यबलेन तथा कल्पनात् । एवं च जयादेर्बन्धनादेश्च राजगतत्वयोग्यत्वेऽपि जयादेर्दोषत्वराहित्यात्तत्प्रति स्वातन्त्र्यं राज्ञि जयिशब्दस्य प्रवृत्तौ निमित्तम् । बन्धनादेस्तु दोषत्वान्न तत्प्रति तन्निमित्तम् । हराविन्द्रादिशब्दनिमित्तैश्वर्यादेः स्वगतत्वयोग्यत्वेऽपि दोषत्वराहित्यात् बन्धनादेर्दोषत्वेऽपीश्वरगतत्वयोग्यत्वराहित्यादुभयं प्रति स्वातन्त्र्यमीश्वरे रुद्रेन्द्रबद्धमृतादिशब्दानां प्रवृत्तौ निमित्तम् ।

यद्वा 'सर्वे वेदा यत्पदमामनन्ति' ।

---

१. उक्तं चानुव्याख्याने - 'स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम्'।

'नामानि सर्वाणि यमाविशन्ति' । (भाल्लवेयश्रुतिः, सू.भा.१.१.१)
'सर्वान्तर्यामिणि हरावस्मच्छब्दविभक्तयः' ।।
युष्मच्छब्दगताश्चैव वचनान्यखिलान्यपि
स्वातन्त्र्यात्सम्प्रवर्त्तन्त' इत्यादि श्रुतेः

'सर्वस्य तदधीनत्वात्सर्वशब्दाभिधेयता' ।

"वेदैश्च सर्वैरहमेव वेद्य" (भ.गी.१५.१५) इत्यादि स्मृतेश्च स्वातन्त्र्यमात्रं प्रवृत्तिनिमित्तम् । ब्रह्मान्यत्र शब्दप्रवृत्तौ क्वचित्तद्गतत्वं क्वचित्स्वातन्त्र्यं क्वचिदुभयम् । दण्डीत्यादौ तद्गतत्वमेव । धनीत्यादौ स्वातन्त्र्यमेव । अतो न दण्डाद्यनाश्रये तत्स्वामिनि दण्डीति, धनवाहके तदस्वामिनि धनीति च प्रयोगः जायते । [1]जयि शब्दस्य चोभयं निमित्तं राज्ञि । सैन्यकेषु जयिशब्दाप्रयोगात् । दुःखिमृतबद्धशब्दानां तद्गतत्वमेव निमित्तम् । ब्रह्मणि तु स्वातन्त्र्यं सर्वशब्दानां प्रवृत्तौ निमित्तम् । "स बद्धः स दुःखी स बन्धयति स दुःखयति" इत्यादि श्रुतेः । न चैकशब्दस्यैकत्रैकं निमित्तं चेदन्यत्रापि तथेति नियमः । एकस्यैव धनवच्छब्दस्य धनवत् गृहमित्यादावाश्रयत्वनिमित्तकत्वेऽपि धनवान् पुरुष इत्यादौ स्वामित्वनिमित्तकत्वात् ।

किञ्च यथा मृत्तिकादौ द्रव्यत्वसामान्ये, द्वेषादौ च गुणत्वसामान्ये सत्यपि सुवर्णादाविव ज्ञानादाविव द्रव्यमिति गुण इति च न प्रयोगः, यथा च धेनुशब्दनिमित्तस्य घेट इञ्चेति व्याकरणोक्तस्य धानकर्मत्वस्य महिष्यादौ सत्त्वेऽपि तत्र तदप्रयोगः, यथा च निमित्ते सत्यपि कुलाले कुम्भकारशब्दस्येवोदञ्चनकारादिशब्दानामप्रयोगः, यथा च पङ्कजादिशब्दानां यौगिकत्वपक्षे योगरूढत्वपक्षे च कुमुदादौ योगस्य सत्त्वेऽपि तदप्र-

---

१. जयि इति नास्ति । - क.

योगः, यथा च घटपटसंयोगस्यैकत्वेन घटेऽपि घटसंयोगसत्त्वेऽपि घटसंयुक्तशब्दाप्रयोगस्तथा राज्ञि सत्यपि निमित्ते मृतबद्धादिशब्दाप्रयोगः । न च विदुषां मृत्तिकादौ द्रव्यादिशब्दप्रयोगो भवतीति वाच्यम् । राजादावपि विदुषां बद्धादिशब्दप्रयोगे क्षतेरभावात् ।

'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयत' । (स्कान्द,सू.भा.१.४.४) इत्यादिस्मृतेः ।। ७२ ।।

संगृह्याह - **दुःखादेरिति** ।

**दुःखादेर्जीवगस्याऽपि स्वाधीनत्वेन हेतुना ।**
**दुःखीति गीयते ब्रह्म धनस्वामी धनी यथा ।। ७३ ।।**

न चैवं सर्वशब्दानां स्वातन्त्र्याश्रयत्वयोः प्रवृत्तिनिमित्तयोर्भेदान्नानार्थकत्वापत्तिः । स्वातन्त्र्याश्रयत्वयोः सम्बन्धयोर्भेदेऽपि निमित्तस्य दुःखबन्धावरत्वादेरेकत्वात्तदाश्रितेऽपि स्वाधीनत्वस्यानुगतत्वाच्चानानार्थकत्वोपपत्तेः । न हि नानार्थेष्वक्षादिशब्देष्वेकं प्रवृत्तिनिमित्तम् । एवं च रूढस्य वा यौगिकस्य वा यस्य शब्दस्य प्रवृत्तिनिमित्तम् आश्रितत्वेन वा यथेष्टविनियोक्तृत्वरूपस्वातन्त्र्यविषयत्वेन वा यदधीनं स तस्य वाचकः । तत्रापि तन्त्रं प्रत्यधीनत्वस्य मुख्यत्वात्तद्वाचिता मुख्या । एवं दुःखिबद्धादिशब्दानां स्वातन्त्र्यादेव प्रवृत्तिः । अव्यक्तादिशब्दानां त्वाश्रयत्वादपि । तन्निमित्ताव्यक्तत्वस्य परमसूक्ष्मब्रह्मण्येव मुख्यत्वात् । न च निमित्ताधिक्यात् न मुख्यत्वम् । अतिसहनवति पुंसि सिंहशब्दस्याल्पपङ्कजादप्यधिकपङ्कजे पद्मे पङ्कजशब्दस्य च मुख्यत्वप्रसङ्गादिति वाच्यम् । तत्र सिंहत्वजातेः पद्मत्वजातेश्च निमित्तत्वेन विवक्षितत्वात् । तयोश्च तत्रातिशयाभावात् । अल्पज्ञादपि बहुज्ञे विद्वच्छब्दस्य, मण्डलाधिपादपि सार्वभौमे भूपशब्दस्य मुख्यत्वदर्शनाच्च ।। ७३ ।।

### ('सर्वं खल्विदं ब्रह्म' इति श्रुत्यर्थनिरूपणम्)

"सर्वं खल्विदं ब्रह्म" (छां.उ.३.१४.१) इत्यादिश्रुत्यर्थमाह - **सर्व-मिति** ।

**सर्वं खल्विदमित्याद्याः श्रुतयः प्रवदन्ति हि ।**
**सर्वव्याप्तिनियन्तृत्वे न तु जडादिरूपताम् ।। ७४ ।।**

"सर्वं समाप्नोषि ततोऽसि सर्वः" (भ.गी.११.४०) इति स्मृत्या सर्वात्मताबोधकश्रुतिः सर्वव्यापकत्वपरतया व्याख्याता । नियामकत्वे तु राजा जयीत्याद्युक्तेः ।। ७४ ।।

### (अभेदवचनानामाशयविशेषकथनम्)

ननु तत्त्वमसीत्याद्याः श्रुतयो जीवेशाभेदं वदन्तीति कथं जीवाभिन्नस्य सर्वनियामकत्वादिकं तत्राह - **ईशाभेदगिर इति** ।

**ईशाभेदगिरो जीवे तदधीनत्वतः क्वचित् ।**
**तदाधारत्वतो वा स्युर्न जीवाभेदतो विभोः ।। ७५ ।।**

'धान्यमसि धिनुहि देवान्' इत्यत्र सतुषद्रव्यधान्याधीनतण्डुले वितुषे धान्यशब्दप्रयोगो यथा, 'ब्राह्मणो वै सर्वा देवता' इत्यत्र सर्वदेवताधारे ब्राह्मणे देवताशब्दप्रयोगो यथा तद्वत् ।। ७५।।

ननु सृष्ट्यादौ प्रधानादिसापेक्षत्वेन स्वातन्त्र्यहानिः स्यात्तत्राह - **स्वतन्त्र इति** ।

**स्वतन्त्रोऽचिन्त्यशक्तिर्हि कर्त्तुं चाकर्त्तुमन्यथा ।**
**कर्त्तुं शक्तोऽपि सृष्ट्यादौ यत्सहायमपेक्षते ।। ७६ ।।**

[1]स्वतन्त्रपदेनैव शङ्का निरस्ता ।। ७६ ।।

---

१. इदं वाक्यं क कोशे दृश्यते ।

**तत्तत्तस्य सहायः स्यात् सर्वशक्तिप्रदस्य हि ।**
**लीला ह्येव परेशस्य स्वेच्छया क्रीडतो विभोः ।। ७७ ।।**

तत् प्रधानादिकं तस्य सहायो न । किन्तु तदपेक्षणं विभोर्लीलैव ।। ७७ ।।

सदृष्टान्तमुपपादयति - **स्वयमिति** ।

**स्वयं गन्तुं समर्थस्य यष्ट्यादानं क्वचिद्यथा ।**
**लीलयैव तथा विष्णोःप्रधानादेरपेक्षणम् ।। ७८ ।।**

यथा राजत्वं प्रजापेक्षं पितृगुरुत्वादिकं पुत्रशिष्यादिसापेक्षं तथेश्वरत्वं नियम्यप्रधानाद्यपेक्षमिति तदपेक्षणं सार्थकमित्याशयेनाह -**प्रधानादीति** ।

**प्रधानादिनियन्तृत्वात् सिद्ध्यतीश्वरताऽधिका ।**
**न हि सेनां विना राजा पिताऽपत्यं विना क्वचित् ।। ७९ ।।**

**(जैवादृष्टकर्मानुगुण्येन फलदत्वान्नेश्वरस्य वैषम्यादि)**

ननु विषमप्रजास्रष्टृत्वेन वैषम्यं स्यादीशस्य तत्राह - **विषमोत्पादनात् इति** ।

**विषमोत्पादनान्नेशो वैषम्यं सज्यते क्वचित् ।**
**यतः सोऽपेक्षतेऽदृष्टं जीवानां सर्जने विभुः ।। ८० ।।**

"वैषम्यनैर्घृण्ये न सापेक्षत्वात्" (ब्र.सू.२.१.३५) इति सूत्रात्, "पुण्येन पुण्यं लोकं नयति" (षट्प्र.३.७) इत्यादिश्रुतेः, स ईशः विषमविश्वसर्जने जीवानामदृष्टमपेक्षते ।। ८० ।।

नन्वेवं कर्मणां स्वातन्त्र्यं स्यात्तत्राह - **विषमाणीति** ।

**विषमाण्यप्यदृष्टानि तेन वै कारितानि हि ।**
**नो चेत्स्वातन्त्र्यमागच्छेज्जीवादृष्टे हि सर्वथा ।। ८१ ।।**

विषमादृष्टान्यपीशाधीनान्येव । "स एव साधुकर्म कारयति स एवासाधुकर्म कारयति" (कौषी.उ.३.८) इत्यादि श्रुतेः। नो चेत् कर्मण ईशानधीनत्वाङ्गीकारे ।। ८१ ।।

नन्वेवं विषमकर्मकारित्वाद्वैषम्यतादवस्थ्यं तत्राह - **कर्मेति** ।

**कर्म कारितमीशेन यत्तत्प्राचीनकर्मणाम् ।**
**अनादीनां प्रवाहेण स्वाधीनानामपेक्षया ।। ८२ ।।**

ईश्वरेण यत्कर्म कारितं तत्तत्प्रवाहानादिस्वाधीनपूर्वकर्मापेक्षयैव ।। ८२ ।।

**(आप्तकामस्य सृष्टिः केवललीलया)**

नन्वाप्तकामस्य कथं स्रष्टृत्वम्? न हि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्त्तते तत्राह - **तस्येति** ।

**तस्यं सृष्ट्यादिकर्तृत्वं लीलैव स्याच्छिशोर्यथा ।**
**आनन्दोद्रेकतश्चेष्टा न प्रयोजनवाञ्छया ।। ८३ ।।**

यथा शिशोः क्रीडा प्रयोजनेच्छां विनैव, तथेशस्य विश्वोदयादिकर्तृत्वं प्रयोजनेच्छां विनैव केवलानन्दोद्रेकादेव । 'को ह्येवाऽन्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तै.उ.२.७) इति श्रुतेः । चतुर्विधा हि प्रवृत्तिः सुखरागाद्दुःखद्वेषात् दुःखोद्रेकात्सुखोद्रेकाच्च । आद्या भोजनादावस्मदादीनाम् । द्वितीया कण्टकापसरणादौ । तृतीया नारकिकानाम् । चतुर्थी बालोन्मत्तादीनाम् । तिसृणां हरौ बाधाच्चतुर्थ्येव भवेत् ।। ८३ ।।

**कृपया वा भवेत्तस्य प्रवृत्तिर्विश्वसर्जने ।**
**दातुं भोगं विमोक्षञ्च जीवेभ्यः करुणानिधेः ।। ८४ ।।**

संसारयोग्येभ्यः प्रलये लीनेभ्यो जीवेभ्यो धर्माधर्मफलभोगं, मुक्त्यधि-

कारिभ्यो विमोक्षं च दातुं करुणानिधेः विश्वसर्जने प्रवृत्तिः । स्फुटा हि जीवन्मुक्तानां शुकादीनां करुणयोपदेशादौ प्रवृत्तिः ।। ८४ ।।

ननु कारुणिकश्चेत्कथं कांश्चिज्जीवान् दुःखं प्रापयति तत्राह -**परार्थेति**।

**परार्थास्तस्य सर्वेहाः पूर्णकामस्य सर्वदा ।**
**जीवादृष्टस्य तत्रापि सहकारित्वमिष्यते ।। ८५ ।।**

यस्य यादृशी योग्यता तादृशं तस्मै फलं प्रयच्छन् नह्यकारुणिको भवति ।। ८५ ।।

**(अग्न्यादिशब्दानाममुख्यवृत्त्या अग्न्यादिपरत्वेन न कर्मलोपः)**

नन्वग्न्यादिशब्दानां सर्वेषां विष्णुवाचकत्वे अन्यव्यवहारविलोपः स्यात्तत्राह - **ज्ञानिन इति** ।

**ज्ञानिनो व्यवहारायाज्ञानादन्ये जना गिराम् ।**
**ब्रह्मान्यत्र सदा लोके प्रयोगं कुर्वते स्फुटम् ।। ८६ ।।**

विद्वद्रूढिमहायोगादिना सर्वशब्दानां हरौ समन्वयेऽपि केवलरूढियोगादिना ब्रह्मान्यत्रापि ज्ञानिनोऽग्न्यादिशब्दान् व्यवहारसिद्धये प्रयुञ्जते । अज्ञानिनस्तु हरिपरत्वाज्ञानादेवान्यत्र प्रयुञ्जत इति न व्यवहारविलोपः ।। ८६ ।।

**(परमैश्वर्यादीश्वरस्यैकत्वानेकत्वे युज्येते)**

नन्वीश्वर 'एकमेवाद्वितीयम्' (छां.उ.६.२.१) इति श्रुतिसिद्ध एक इति कथं तस्य रामकृष्णादिनानेकत्वं तत्राह - **एक इति** ।

**एकोऽप्यनेकः सुधियां प्रकाशते**
**नास्त्येकता तस्य विरोधिनी विभोः ।**

**स्वानेकतायाः श्रुतिगौरवात् क्वचित्**
**नैश्वर्यतस्तत्र विरोधचिन्तनम् ।। ८७ ।।**

एकोऽप्यचिन्त्यशक्त्याऽनेकः सुधियां तदनुगृहीतानां प्रकाशते । तस्यैकता स्वानेकताया विरोधिनी न । श्रुतिगौरवात्, प्रमाणसिद्धत्वादित्यर्थः । तदचिन्त्यैश्वर्यात्तत्र विरोधचिन्तनं सुधियां न भवति ।। ८७ ।।

एतदेव स्पष्टयति - **विरुद्धा इति** ।

**विरुद्धा लोकतो धर्मा अन्योन्यं ये निसर्गतः ।**
**नैश्वर्येण विरुद्धास्ते तिष्ठन्ति हि हरौ सदा ।। ८८ ।।**

ये धर्मा लोकेऽन्योन्यं स्वभावतो विरुद्धाः, ऐश्वर्येण सहाविरुद्धाश्च भवन्ति ते हरौ सदा तिष्ठन्ति ।। ८८।।

विरुद्धानेव गुणानाह - **अण्विति** ।

**अणुत्वव्यापकत्वाद्येकानेकत्वादिका गुणाः ।**
**उदासीनत्वकर्तृत्वे भोक्तृत्वाभोक्तृते तथा ।। ८९ ।।**

नन्वेवं दुःखित्वसुखित्वसर्वज्ञत्वासर्वज्ञतादीनां लोके विरुद्धानां हरौ समावेशः स्यात्तत्राह - **य इति** ।

**ये चैश्वर्यं विरुन्धन्ति दुःखाज्ञत्वादिका अघाः ।**
**न स्पृशन्ति कदाचित्तं सदा निर्दोषरूपिणम् ।। ९० ।।**

ऐश्वर्यविरोधिनो दुःखित्वादयो न सन्ति । तत्र नित्यनिर्दोषत्वप्रतिपादकश्रुतिविरोधापत्तेः ।। ९० ।।

ननु जीववत्तस्यापि दोषित्वं स्यात्तत्राह - **प्रेक्षावन्तमिति** ।

**प्रेक्षावन्तं स्वतन्त्रं हि सर्वसामर्थ्यबृंहितम् ।**
**सर्वभावनियन्तारं दोषगन्धः कथं स्पृशेत् ।। ९१ ।।**

न हि सर्वसामर्थ्ययुक्तः प्रेक्षावान् अवद्यगुणो दृष्टः ।। ९१ ।।

**(भगवत अचिन्त्यैश्वर्यम्)**

तस्याचिन्त्यैश्वर्यमाह - **देशादिति** ।

**देशाच्च कालाद् गुणतोऽप्यनन्तो**
**नित्यान्यनेकानि वपूंषि धत्ते ।**
**व्योमस्वभावो नितरामसङ्गो**
**भक्तानुकम्पी सुरवृक्षशीलः ।। ९२ ।।**

देशापरिच्छिन्नत्वं सर्वदेशनिष्ठात्यन्ताभावाप्रतियोगित्वम् । रामकृष्णादिमूर्त्तीः सदा धत्ते । आकाशवदसङ्ग उदासीनोऽपि भक्तानुकम्पी कल्पतरुस्वभावः ।। ९२ ।।

**अवतारस्य रूपाणि नित्यान्येव विभोर्हरेः ।**
**अभिन्नानि हि सर्वाणि भेदकार्यं क्वचिद्भवेत् ।। ९३ ।।**

अवतारावतारिणोरवताराणां चाभेदेऽपि क्वाचित्कभेदकार्यं भेदप्रतिनिधिना विशेषेण भवतीत्यर्थः ।। ९३ ।।

तदेवाह - **विभोरिति** ।

**विभोरचिन्त्यशक्त्यैव भेदस्थानेऽभिषिक्तया ।**
**अहिकुण्डलवत्तस्य स्वरूपाभिन्नविग्रहः ।। ९४ ।।**

भेदप्रतिनिधिरूपाचिन्त्यशक्त्या भेदकार्यं भवति । यथाऽभेदे सत्यप्यहेः कुण्डलमिति भेदव्यहारस्तद्वत् ।। ९४ ।।

ननु रामकृष्णादिरूपाणां बाल्ययौवनाद्यवस्थावतां कथं नित्यत्वं तत्राह - **वय इति** ।

**वयोवस्थाविशेषा ये प्रदर्श्यन्तेऽवतारतः ।**
**नित्याः सर्वे कदाचित्तानाविर्भावयतीश्वरः ।। ९५ ।।**

सर्वान् वयोविशेषान्नित्यानेव भक्तानुकम्पया मानुषाद्यनुकरणेन च कालक्रमेण प्रकटयति चेत्यर्थः ।। ९५ ।।

**लीलाः सर्वा विभोर्दिव्या भक्तानुकम्पया परम् ।**
**लोकवत्ताः प्रदर्श्यन्ते चिन्तया मुक्तिदायिकाः ।। ९६ ।।**

दिव्या अलौकिका एव भक्तानुकम्पया लोकवत् लौकिक्य इवाचिन्त्यया शक्त्या प्रदर्श्यन्ते, चिन्तनमात्रेण तन्महाप्रसादद्वारा मुक्तिदायिकाः ।। ९६ ।।

**(हरेरवतारादौ रोदनादि दैत्यमोहाय)**

ननु नित्यानन्दरूपस्य परमकारुणिकस्य भक्तानामतिदुःखं रोदनादिकं क्वचिदवतारे दृश्यमानं कथमुपपद्यते तत्राह - **रोदनमिति** ।

**रोदनं शोचनं तस्य क्षतदैन्याज्ञतादिकम् ।**
**अवतारे क्वचिद्विष्णोर्दैत्यव्यामोहनाय तत् ।। ९७ ।।**

श्रीरामस्य सीतादिवियोगनिमित्तकरोदनम् । तथा शोचनम् । शत्रुशस्त्रेणाङ्गेषु क्षतानि । दैन्यभाषणं सीताया अन्वेषणेनाज्ञत्वम् । तथाऽन्यदपि किञ्चिदनीश्वरत्वद्योतकं यत् तदसुराणां व्यामोहायाविद्यमानमेव प्रदर्श्यते । न च वैषम्यापत्तिः । तेषामदृष्टमनुसरतैव तथा व्यामोहनात् । न हि यादृशी यस्य योग्यता तस्य तादृशमेवाधिकारं फलं च प्रयच्छन् विषमो भवति । प्रसिद्धं हि विष्णोर्बुद्धादिरूपेण दैत्यव्यामोहकत्वम् ।। ९७ ।।

एतदेव स्पष्टयति - **योग्यतेति** ।

**योग्यतामनुरुन्धानो मोहयन्नसुरान् समः ।**
**दोषित्वज्ञानवन्तस्ते विष्णौ दैत्याःसदाऽशुभाः ।। ९८ ।।**

यतस्ते सदा निर्दुष्टेऽपि विष्णौ सदोषत्वज्ञानवन्तोऽशुभा दुष्टाशया अतस्तान् पापिष्ठान् पापफलभुक्तये व्यामोहयन्नपि सम एव । न विषमः कल्पतरुस्वभावत्वात् । 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (भ.गी.४.११) इति स्मृतेः ।। ९८ ।।

**(ब्रह्मरुद्रादयः न विष्णोरवतारभूताः)**

ननु मत्स्यादिवद् रुद्रादिरपि विष्णोरवतारः स्यात्तत्राह - **ब्रह्मेति** ।

**ब्रह्मरुद्रादयः सर्वे तत्सृष्टास्तदधीनकाः ।**
**प्रलये तदभावो हि श्रुत्या स्मृत्या च भण्यते ।। ९९ ।।**

"नारायण एवाग्र आसीन्न ब्रह्मा न च शङ्करः" "यो ब्रह्माणं विदधाति" (श्वेताश्वतर.उ.६.१८) "यस्य त्र्यक्षः शूलपाणिरजायत" इत्यादिश्रुत्या

'ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः ।
प्रसादात्प्रादुरभवत्पद्मं पद्मनिभेक्षणात् ।।
ब्रह्मा समभवत्तस्मात्स तस्यैव प्रसादजः ।
अह्नः क्षये ललाटाच्च सुतो देवस्य वै तदा ।।
क्रोधाविष्टस्य सञ्जज्ञे रुद्रः संहारकारकः' । (म.भारतम्)

इति भारते च सृष्टिसमये ब्रह्माद्युत्पत्त्युक्तेः । तथा रुद्रं प्रति ब्रह्मोक्तिः ।।

अहं प्रसादजस्तस्य कस्मिंश्चित्कारणान्तरे ।
त्वञ्चैव क्रोधजस्तात पूर्वसर्गे सनातनः ।।
मया च सार्द्धं वरदं विबुधैश्च महर्षिभिः ।
प्रसादयाशु लोकानां शान्तिर्भवतु मा चिरम् ।।

ब्रह्मणा त्वेवमुक्तस्तु रुद्रः क्रोधाग्निमुत्सृजन् ।
प्रसादयामास ततो देवं नारायणं प्रभुम् ।।
शरणं च जगामाद्यं वरेण्यं वरदं प्रभुम् । (म.भारतम्) इति ।।
'अहो नारायणं तेजो दुर्दर्शं द्विजसत्तम ।।
यत्राविशन्ति कल्पान्ते सर्वे ब्रह्मादयः सुराः' ।। (म.भारतम्)

इति चातो ब्रह्मरुद्रयोर्जीवत्वमेव च नेश्वरत्वम् । ईश्वरावताराणां मत्स्यादीनामेवंविधोक्तिर्हि श्रुतिभारतादौ न विद्यते ।। ९९ ।।

**(विष्णोर्ज्ञानेच्छादयो गुणाः नित्याः)**

ननु हरीच्छादिगुणानां जीवेच्छादिवज्जन्यत्वप्रसङ्गेन को विशेषो जीवेशयोस्तत्राह - **ज्ञानेति** ।

**ज्ञानेच्छाकृतिमुख्या हि गुणा नित्या जगत्पतेः ।**
**जीवादृष्टस्य सत्त्वेऽपि सदा सृष्ट्यादिकं न हि ।। १०० ।।**

नित्याः स्वरूपतः[1] ।। १०० ।।

**(स्वत एव काले विशेषाङ्गीकृतेः सृष्टिकाल एव सिसृक्षा भवति हरेरिति न सदा सृष्ट्यादि)**

ननु कारणसाकल्ये सति कथं कार्यानुदयस्तत्राह - **सृष्टीति** ।

**सृष्ट्यादिकालभेदेन व्यवस्था सूपपद्यते ।**
**कालेन जायते योगो ज्ञानादेः प्रकृतौ तदा ।। १०१ ।।**

सृष्टिकालेन हरिज्ञानेच्छादेः प्रधानादौ सम्बन्धो जायते । ततः सृष्टिः । प्रलयकालेन युक्तेच्छादिना प्रलयो भवतीति सूपपन्ना व्यवस्था । कालभेदस्तूपपादितः प्राक् ।। १०१ ।।

---

१. इदं वाक्यं क कोशे नास्ति ।

**(हरिर्नित्यविग्रहः)**

ननु कार्यमात्रस्य प्रलये नाशादीशस्य देहाभावात्कथं तदानीमिच्छादयो गुणास्तत्रेत्याशङ्कामपाकर्त्तुमीश्वरस्य नित्यविग्रहं व्यवस्थापयति - **अविग्रहस्येत्यादिना** ।

**अविग्रहस्य कर्तृत्वप्रवेष्टृत्वादिकं तथा ।**
**न संभाव्यं न दृष्टं हि तस्मान्नित्यवपुर्हरिः ।। १०२ ।।**

अविग्रहस्य कार्यानुकूलकृतिमत्त्वादिकर्तृत्वप्रवेष्टृत्वादिकं न दृष्टं, न वा युक्तम् । अतः कार्यमात्रोत्पत्तेः प्राक् नित्यविग्रहो हरिः सिद्धः । ननु भगवद्विग्रहो न नित्यो विग्रहत्वादस्मदादिविग्रहवदित्याद्यनुमानेन तस्यानित्यत्वमिति चेत्तत्र प्राकृतत्वस्योपाधित्वात् । भगवद्विग्रहस्य प्राकृतत्वाभावेनानित्यत्वाभावसिद्धेः ।। १०२ ।।

हरिविग्रहानित्यतायामागमविरोधमाह - **विग्रहेति** ।

**विग्रहानित्यतायां हि स्याच्छ्रुत्यादिविरोधिता ।**
**तदुत्पत्तिविनाशादौ प्रमाणं विद्यते न हि ।। १०३ ।।**

'पुरा कल्पापाये स्वकृतमुदरीकृत्य शेते' ।।
'सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः ।।
परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वदा' ।

इत्यादिश्रुतिभिः

स सर्गकाले च करोति सर्गं
संहारकाले च स हन्ति भूयः
संहृत्य सर्वं निजदेहसंस्थं
कृत्वाऽप्सु शेते जगदन्तरात्मा ।। इत्यादिस्मृतिभिश्च हरिविग्रहस्य प्रलये स्थितिं प्रतिपादयन्तीभिर्विरोधापत्तेः ।। १०३ ।।

तद्विग्रहानित्यतायां युक्तिविरोधमप्याह - **भोगेति** ।

**भोगादृष्टाद्यभावान्न चोत्पत्तिर्युज्यते हरेः ।**
**न भोगादि विना युक्तो विग्रहादिसमुद्भवः ।। १०४ ।।**

प्रयोजनबीजाभ्यामेव कार्यमात्रं जायते । तच्चाऽऽप्तकामस्याक्रियस्य नास्तीति कथं विग्रहोत्पत्तिरतो नित्य एव विग्रहोऽङ्गीकार्यः ।। १०४ ।।

**धर्मिग्राहकमानेन नित्यमेव वपुर्हरेः ।**
**लाघवं च भवेदेवं ध्वंसाद्यङ्गीकृतौ न तत् ।। १०५ ।।**

येन मानेन विग्रहः सिद्धस्तेन नित्य एव सिद्धः तद्ध्वंसप्रागभावाद्यङ्गीकारे गौरवम् । अन्यथा तार्किकादीनामिव परकायप्रवेशनेनैवेश्वरस्य लीलोपपत्तौ विग्रहवत्त्वं न सिद्ध्येत् ।। १०५।।

ननु किं धर्मिग्राहकं तत्राह - **मानमिति** ।

**मानं सहस्रशीर्षेति भगवद्विग्रहे दृढम् ।**
**ततो विराज उत्पत्तिस्तमसः परता ततः ।। १०६ ।।**

'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' (पु.सू., ऋ.१) इत्यादिश्रुतिर्विग्रहे मानम् । न च विराट्स्वरूपपरेयम्, 'ततो विराडजायत' 'आदित्यवर्णं तमसः परस्तात्' इति श्रुत्या सहस्रशीर्षत्वादिविशिष्टाद्विराडुत्पत्तेस्तमःपदार्थप्रकृतिपरतायाश्च बोधनात् विराजः प्रकृतिकार्यस्य तत्परत्वासम्भवात् ।। १०६ ।।

भारतमुदाहरति - **हरिमिति** ।

**हरिं सहस्रशिरसं सहस्रचरणेक्षणम् ।**
**प्राहुर्नारायणं देवं यं विश्वस्य परायणम् ।। १०७ ।।**

**यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।**
**गृणन्ति विश्वकर्माणं सत्यं सत्येषु सामसु ।। १०८ ।।**

वाकानुवाकौ ऋगादिवेदगतप्रकरणविशेषौ[1] ।। १०७ ।। १०८ ।।

अवतारोऽपि नित्यविग्रहस्याविर्भाव एवेत्याह - **यमिति** ।

**यं देवं देवकी देवी वसुदेवादजीजनत् ।**
**भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः ।। १०९ ।।**

भौमस्य महीयसो ब्रह्मणो वेदस्य गुप्त्यै वेदोक्तधर्मपालनाय यथा सर्वत्र व्यापकोऽप्यग्निररणावाविर्भवति तथा नित्यविग्रहो देवक्यादावाविर्भवतीत्यर्थः ।। १०९ ।।

यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः
सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ।।

इति वैष्णवे लोकात्मकमुक्त्वा दिव्यविग्रहमाह - **तच्चेति** ।

**तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ।**
**द्यौस्त्वया शिरसा व्याप्ता पद्भ्यां देवी वसुन्धरा ।**
**विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः ।। ११० ।।**

तत्त्वेन याथार्थ्येन त्वत्प्रसादात्पश्यामि । पुरुषोऽन्तर्यामी ।। ११० ।।

**अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।**
**ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ।। १११ ।।**

**ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः ।**
**शाश्वतं वैष्णवं श्रीमद्दृशे यद्धनञ्जयः ।। ११२ ।।**

श्रीवैष्णवे शाश्वतत्वं महाप्रसादेनाक्रूराय दर्शितत्वं स्पष्टमुक्तम् ।। ११२।।

---

१. इदं वाक्यं क कोशे नास्ति ।

**'स ददर्श महात्मानं विश्वरूपं महाभुजम् ।**
**सहस्रसूर्यप्रतिमं दीप्तिमत्पावकोपमम् ।**
**तं दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम्' ।। ११३ ।।**

सोऽक्रूरो विश्वरूपं व्यापकं ददर्श ।। ११३ ।।

**'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ।। ११४ ।।**
**मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम्' ।।११५।।**

भगवता प्रसादेन दर्शितं तेजोमयं प्रकाशरूपं विश्वं व्यापकं सर्वस्याद्यं कारणम् । एतादृशप्रसादं विनाऽर्जुनान्येनादृष्टम् । एतादृशदर्शनहेतुरेतादृशः प्रसादोऽन्यस्मिन्नास्तीत्यर्थः ।। ११४-११५ ।।

**'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति' ।। ११६ ।।**

अवयवावयविनोरभिन्नत्वाद्विग्रहस्य व्यापकत्वेन तदवयवानां पाण्यादीनां व्यापकत्वोपपत्तिः ।। ११६ ।।

**(सविशेषे हरौ ब्रह्मशब्दो मुख्यः)**

सविग्रहे हरौ ब्रह्मशब्दो मुख्य इति गारुडेन प्रतिपादयति - **वेद इति**।

**वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।**
**तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ।। ११७ ।।**

प्रयोगप्राचुर्यस्य प्रवृत्तिनिमित्तस्य असंख्येयकल्याणालौकिकगुणवत्त्वस्य शार्ङ्गिणि विद्यमानत्वेन तत्रैव ब्रह्मशब्दो मुख्यवृत्तः ।। ११७ ।।

ननु ब्रह्मशब्दस्यान्यत्रापि चतुर्मुखादौ प्रयोगप्राचुर्यमस्तीत्यत आह - **यस्मिन्निति** ।

**यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।**
**तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ।। ११८ ।।**

अन्यत्र प्रयुज्यमानोऽपि न मुख्य इत्यर्थः ।। ११८ ।।

आश्वमेधिकमुदाहरति - **राजाधिराज इति** ।

**राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान् ।**
**ईश्वरं तं विजानीध्वं कर्त्तारमकृतं हरिम् ।। ११९ ।।**

ब्रह्ममयो ब्रह्मस्वरूपो बृहद्गुणकः । विष्णुशब्दो विग्रहविशिष्टे योगरूढः ।। ११९ ।।

**दध्यौ ब्रह्म परं विप्र प्रविश्य यमुनाजले ।**
**फणासहस्रमालाढ्यं बलभद्रं ददर्श सः ।। १२० ।।**

यमुनाजलेऽघमर्षणं कुर्वन्नक्रूरः परं ब्रह्म ध्यायन् फणासहस्रमालाढ्यं शेषं तस्योत्सङ्गे घनश्यामं हरिं ददर्शेत्यन्वयः ।। १२० ।।

**तस्योत्सङ्गे घनश्याममाताम्रायतलोचनम् ।**
**चतुर्बाहुमुदाराङ्गं चक्राद्यायुधभूषणम् ।। १२१ ।।**

आ ईषत्ताम्रे आयते च लोचने यस्य । ब्रह्मध्यानं कुर्वतां ब्रह्मदर्शनमेवोचितमिति विग्रहस्यैव ब्रह्मत्वसिद्धिः । न हि ब्रह्म ध्यायतोऽब्रह्मापरोक्षं युक्तम् । 'दध्यौ ब्रह्म परं विप्र' इत्यारभ्य 'सनन्दनाद्यैर्मुनिभिश्च योगैरकल्मषैः सञ्चिन्त्यमानं तत्रस्थैर्नासाग्रन्यस्तलोचनैः' इत्यन्तेन विग्रहस्याप्राकृतत्वालौकिकत्वप्रसादैकदृश्यत्वादिकं स्पष्टमुपपादितम् । न हि सनन्दनाद्यैर्मायिकमनित्यमब्रह्मस्वरूपं चिन्तनीयम् ।। १२१ ।।

**(सगुण एव ब्रह्मशब्दो मुख्य इत्यत्र पञ्चरात्रसम्मतिकथनम्)**

पञ्चरात्रमुदाहरति - **सर्वेति** ।

**सर्वगुणातीताय च षड्गुणायादिवेधसे ।**
**सत्यज्ञानानन्तगुणब्रह्मणे चतुरात्मने ।। १२२ ।।**

सर्वप्राकृतगुणराहित्यं सत्याद्यनन्तकल्याणगुणकत्वं सविग्रहस्य पञ्चरात्रे स्पष्टमुक्तम् ।। १२२ ।।

नन्वस्तु सहस्रशीर्षेत्याद्युक्तविग्रहोपासनम् । न चोपासनापरवाक्येन वस्तुसिद्धिः । उपासनाकर्त्तव्यतायां च तात्पर्ये वाक्यभेदापत्तेस्तत्राह - **आदित्य इति ।**

**आदित्ये दृशिना प्रोक्ताऽध्यक्षता वर्त्तमानता ।**
**न योषित्यग्निता नाम्नि ब्रह्मताऽस्तीति कथ्यते ।। १२३ ।।**

"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आ प्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" (महा.ना.उ.१०.१) इति श्रुतेः । हिरण्मयः स्पृहणीयाकारः । कं जलं पिबतीति कापिर्नालम्[1] । कपौ नाले आसनं यस्य तत् नालादत्रुटितं रविकरविकसितं पुण्डरीकं तद्वदक्षिणी यस्य । 'आदित्ये दृश्यते' इत्यनेन वर्त्तमानतयाऽपरोक्षज्ञानविषयो विग्रह उच्यते । उपासामात्रार्थत्वे तद्विरुद्ध्येत । न हि 'योषितमग्निमुपासीत' 'नाम ब्रह्मोपासीत' 'वाचं धेनुमुपासीत' इत्यादौ योषित्यग्नित्वं नाम्नि ब्रह्मत्वं वाचि धेनुत्वं च दृश्यत इति क्वाप्युच्यते । 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' (तै.आ.३.१२.१७) इति विग्रहस्य महत्त्वं मुक्तज्ञेयत्वं चोक्तम् । तमित्यनेनोपक्रान्तस्य सहस्रशीर्षत्वादिविशिष्टस्य परामर्शात् । 'सहस्रशीर्षा'

---

१.इदं वाक्यं क कोशे नास्ति ।

इत्यादिना विग्रहसंस्थानमुपदिश्य 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति सर्वभूतानां तदेकदेशस्थत्वमुक्तमतस्तस्य महत्त्वसिद्धिः । तत्राणुत्वाद्यनन्तपरिमाणानां सत्त्वेन गमनाद्युपपत्तिः । 'अणोरणीयान् महतो महीयान्' इति श्रुतेः । 'अनण्वह्रस्वम्' इत्यादिश्रुत्या तु प्राकृतपरिमाणं निषिद्ध्यते । यथाऽन्यत्र सर्वगते प्रतिव्यक्तिसमाप्त्यभावेऽपि सर्वगतजातेः प्रतिव्यक्ति समाप्तिस्तथाऽन्यत्र सर्वगतेऽणुत्वक्रियावत्त्वाभावेऽपि सर्वगते हरौ तदस्तु । अक्रूरथादौ स्थितस्य हरेर्मुखे ब्रह्माण्डं पश्यतां श्रीयशोदार्जुनादीनां प्रत्यक्षमपि मानम् । न हि 'दिव्यं ददामि ते चक्षुः' इति वदता परमाप्तेन हरिणा स्वैकशरणा मायां प्रदर्श्य प्रतारणीयाः । हरिविग्रहदर्शनं तन्महाप्रसादेनैवेत्युक्तं 'ततः स तस्मै प्रीतात्मा दर्शयामास तद्रूपः' इति वैष्णवे ।। १२३ ।।

**लोकोऽप्यस्ति हरेर्नित्यः श्रुतिभिः प्रतिपादितः ।**
**भक्तानां कमलादीनां विहारायैव केवलम् ।। १२४ ।।**

आप्तकामस्य व्यापकस्य लोकप्रयोजनाभावेऽपि सदा जनानां रमादीनां भक्तानां विहारार्थमेव केवलं श्रुतिस्मृतिसिद्धो नित्यो लोकोऽस्ति 'सहस्रस्थूणे वितते दृढे उग्रे यत्र देवानामधिदेव आस्तेऽक्षयं तमस्यरजसः पराके योऽस्याध्यक्षः परमे व्योमन् तद्विप्राः सोढमन्यवो जाग्रवांसः समिन्धते' 'यत्र पूर्वे साध्याः सन्ति देवाः' 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्यादिश्रुतेः ।। १२४ ।।

**(वैकुण्ठवैभववर्णनम्)**

पञ्चरात्रमुदाहरति - **लोकमिति** ।

**लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् ।**
**अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ।। १२५ ।।**

कदा द्रक्ष्यामीत्यनेनाऽन्वयः ।। १२५ ।।

**नित्यं सिद्धैः समाकीर्णं तन्मयैः पाञ्चकालिकैः ।**
**सभाप्रासादसंयुक्तं वनैश्चोपवनैर्युतम् ।। १२६ ।।**

**वापीकूपतटाकैश्च वृक्षषण्डैश्च मण्डितम् ।**
**अप्राकृतं सुरैर्वेद्यमयुतार्कसमप्रभम् ।**
**प्रकृष्टसत्त्वसङ्कीर्णं कदा द्रक्ष्यामि चक्षुषा ।। १२७ ।।**

प्रकृष्टं विशुद्धमप्राकृतसत्त्वं तेन सङ्कीर्णं युक्तम् । यद्वा प्रकृष्टं सत्त्वं हरेर्वीर्यं तेन व्याप्तमित्यर्थः ।। १२७ ।।

**(भारतोक्तमुक्तलोकवर्णनम्)**

भारतमुदाहरति - **ऊर्ध्वोत्तरमिति** ।

**ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः ।**
**यत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम् ।। १२८ ।।**

**न देवा अपि पश्यन्ति सर्वतेजोमयं शुभम् ।**
**अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः ।**
**स्वयैव प्रभया राजन् दुःप्रेक्ष्यं देवदानवैः ।। १२९ ।।**

**यत्र भूतेश्वरस्तात सर्वप्रकृतिरात्मभूः ।**
**भासयन् सर्वभूतानि स्वश्रिया राजते हरिः ।। १३० ।।**

**नात्र ब्रह्मर्षयस्तात कुत एव महर्षयः ।**
**प्राप्नुवन्ति गतिं ह्येतां यतीनां कुरुसत्तम ।। १३१ ।।**

**न ज्योतींषि च सर्वाणि प्राप्य भास्वन्ति पाण्डव ।**
**स्वयं प्रभुरचिन्त्यात्मा तत्र ह्यतिविराजते ।। १३२ ।।**

**यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिम् ।**

**परेण तपसा युक्ता भाविताः कर्मभिः शुभैः ।**
**शान्ताः सिद्धा महात्मानस्तमो मोहविवर्जिताः ।। १३३ ।।**

**तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ।**
**स्वयंभुवं महात्मानं देवदेवं सनातनम् ।। १३४ ।।**

**स्थानमेतन्महाभाग ध्रुवमक्षयमव्ययम् ।**
**अर्चिरादिसुमार्गेण तत्प्राप्यते कुरुसत्तम ।। १३५ ।।**

**मोक्षधर्मेषु नियतो लघ्वाहारो जितेन्द्रियः ।**
**प्राप्नोति ब्रह्मणः स्थानं तत्परं प्रकृतेर्ध्रुवम् ।। १३६ ।।**

प्रकृतेः परं तदकार्यं ध्रुवं नित्यम् ।। १२८ - १३६ ।।

तस्य लोकादिवैभवं भक्तार्थमेवेत्याह - **लोकेति** ।

**लोकरूपादिसंस्थानं प्रायो भक्तार्थमेव हि ।**
**अनादित्वादनन्तत्वाद्रमादीनामतस्तथा ।**
**लोकादिवैभवं नित्यं स्वतन्त्रस्येशितुर्विभोः ।। १३७ ।।**

**लोकेति** । यद्यपि नित्यवस्तूनां न प्रयोजनापेक्षत्वमिति भगवद्रूपलोकादिवैभवस्य नित्यत्वान्न प्रयोजनाधीनत्वम् । तथापि यदि प्रयोजनचिन्ता तदा रमादीनामनाद्यनन्तानां भक्तानां रमणमेव प्रयोजनमित्याशयेन 'प्राय' इति । नत्वन्यलोकानामिव तल्लोकस्यापि कालेनाक्रमणं स्यात्तत्रोक्तं स्वतन्त्रस्येत्यादि ।। १३७ ।।

**(विष्णोरदेहवाचामाशयकथनम्)**

नन्वपाणिपादादिबोधकमानविरोधस्तत्राह - **अप्राकृतेति** ।

**अप्राकृतत्वतोऽदेहोऽपाणिपादादिकस्ततः ।**
**निर्गुणोऽप्यत एव स्यादतो लोकादिवर्जनम् ।। १३८ ।।**

अदेहोक्तिरपाणिपादाद्युक्तिश्च प्राकृतदेहादिराहित्येन । अन्यथा 'अपाणिपादो जवनो ग्रहीता' इत्यत्र जवग्रहणोक्त्यनुपपत्तेः । लोकादिप्रतिपादकोक्तमानविरोधापत्तेश्च ।। १३८ ।।

**(हरेरकर्तृत्वं निर्लेपाभिप्रायेण)**

ननु सविग्रहस्यैव लोके कर्तृत्वदर्शनादन्यथानुपपत्त्या भवेद् विग्रहो हरेः, कर्तृत्व एव मानं नास्तीत्यत आह - **अकर्तृत्वेति** ।

**अकर्तृत्वगिरस्तस्य निर्लेपत्वं वदन्ति हि ।**
**अन्यथा कर्तृतावाचां बह्वीनां स्यादपार्थता ।। १३९ ।।**

तस्य क्वाचित्काकर्तृत्वोक्तिर्निर्लेपपरा ।
'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्' ।। (भ.गी.४.१३)

'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' ।। (भ.गी.४.१४)

इति स्मृतेः । अन्यथा 'द्यावाभूमी जनयन् देव एकः' ( ऋ.संहिता, विश्वकर्मसूक्तम्, मण्डल.१०) 'विश्वस्य कर्त्ता भुवनस्य गोप्ता' (मुण्ड. १.१) 'यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशम्' (मुं.उ.३.१.३) इत्यादि श्रुतिविरोधापत्तेः ।। १३९ ।।

मोक्षधर्मवाक्यमुदाहरति - **पुरुषमिति** ।

**पुरुषं सनातनं विष्णुं यं तं वेदविदो विदुः ।**
**सर्गप्रलयकर्त्तारमव्यक्तं ब्रह्म शाश्वतम् ।। १४० ।।**

पुरुषमन्तर्यामिणं सनातनं नित्यदेहम् ।। १४० ।।

**भगवन्तमजं दिव्यं विष्णुमव्यक्तसंज्ञितम् ।**
**भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः ।। १४१ ।।**

भावेन भक्त्या शुद्धा निवृत्ताविद्याः ज्ञानेन भगवदापरोक्ष्येण तृप्ताः ऐन्द्रियिकभोगालम्बुद्धयः । अत एव निराशिषस्तादृशभोगे निवृत्तेच्छाः ।। १४१ ।।

**(विष्णोरेव सर्वसृष्टिः)**

**ज्ञात्वाऽऽत्मस्थं हरिं चैव न निवर्त्तन्ति तेऽव्ययाः ।**
**प्राप्य तत्परमं स्थानं मोदन्तेऽक्षरमव्ययम् ।। १४२ ।।**

**केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः ।**
**पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ।। १४३ ।।**

**ततः कृष्णो महाभागः पुनरेव युधिष्ठिर ।**
**ब्राह्मणानां शतं श्रेष्ठं मुखादेवासृजत् प्रभुः ।। १४४ ।।**

**बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् ।**
**पद्भ्यां शूद्रशतञ्चैव केशवो भरतर्षभ ।। १४५ ।।**

**स एवं चतुरो वर्णान् समुत्पाद्य महातपाः ।**
**अध्यक्षं सर्वभूतानां धातारमकरोत् स्वयम् ।। १४६ ।।**

आत्मस्थम् अन्तर्यामिणम् । स्थानं वैकुण्ठम् अक्षरमनश्वरम् ।। १४२ - १४६ ।।

**वेदविद्याविधातारं ब्रह्माणममितद्युतिम् ।**
**भूतमातृगणाध्यक्षं विरूपाक्षञ्च योऽसृजम् ।। १४७ ।।**

विरूपाक्षं रुद्रम् ।। १४७ ।।

**(विष्णोर्विश्वकर्तृत्वानङ्गीकारे बाधककथनम्)**

हरेर्विश्वकर्तृत्वानङ्गीकारे दोषमाह - **आनन्देति** ।

**आनन्दोद्रेकतायाश्च सार्वज्ञ्यादेरपह्नवः ।**
**कर्तृत्वस्य मृषात्वे स्यादप्रामाण्यं श्रुतेर्वृथा ।। १४८ ।।**

'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तै.उ.२.१) इति श्रुत्याऽऽकाशपदार्थस्येशस्यानन्दोद्रेकादेव विश्वकर्तृत्वमुक्तम् । विश्वोदयादिमहाकर्तृत्वेन महानन्दः सिद्ध्यति । तस्याऽकर्तृत्वे महानन्दो न सिद्ध्येत् । 'यः सर्वज्ञ' (मुं.उ.१.१.१०) इत्याद्युक्तं सार्वज्ञ्यादिकं निरर्थकं स्यात् । नन्वस्त्वैन्द्रजालिकवन्मृषाकर्तृत्वं तत्राह - **अप्रामाण्यमिति** । तस्य कर्तृत्वबोधिकानां श्रुतीनां 'सुहृदं सर्वभूतानाम्' इत्याप्तत्वबोधकस्मृतीनाञ्चाप्रामाण्यं स्यात् । न हि ताभिः कर्तृत्वादिकं मिथ्यात्वेनैव बोध्यते येन तादृशपदार्थस्य तथा बोधनान्नाप्रामाण्यं स्यात् ।। १४८ ।।

**(विष्णोर्गुणवाचकश्रुतीनां नानुवादकत्वम्)**

ननु 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः' (मुं.उ.१.१.१०) इति ब्रह्मगुणबोधकवाक्येषु सत्यत्वबोधकपदाभावान्मिथ्याभूता एव च गुणाः स्युस्तत्राह - **मृषात्व इति** ।

**मृषात्वे तद्गुणादीनां श्रुतीनां पीडनं भवेत् ।**
**अप्राप्तत्वाद् गुणादीनामनुवादो न तद्गिरः ।। १४९ ।।**

गुणवाक्यैः प्रमाणस्वाभाव्यादेव सत्या गुणा बोध्यन्ते । गुणानां मृषात्वे 'सत्यः सो अस्य महिमा' इत्यादिसत्त्वेन तद्बोधकश्रुतीनां पीडनमप्रामाण्यं स्यात् । ननु गुणवाक्यानामनुवादकत्वेन निर्गुणवाक्यैकवाक्यत्वोपपत्त्या गुणविधाने तात्पर्यमङ्गीकृत्य वाक्यभेदो नोचितस्तत्राह - **अप्राप्तत्वादिति** । अप्राप्तत्वात्तद्गुणानामनन्तरं प्राप्तस्यैवानुवादो भवेत् । न हि हरेरौपनिषदस्य गुणाः प्रत्यक्षादिप्राप्ता यतः श्रुत्या तदनुवादः स्यात् ।। १४९ ।।

एतदेवोपपादयति - **अनुवादा इति** ।

**अनुवादा भवेयुर्न गुणादेर्बोधका रवाः ।**
**सत्यता स्याद्गुणादीनां श्रुतिप्रामाण्यगौरवात् ।। १५० ।।**

ब्रह्मगुणादिबोधकाः शब्दा अनुवादा न भवेयुरतोऽज्ञातज्ञापकगुणवाक्यप्रामाण्यगौरवाद्गुणादीनां सत्यता स्यात् ।। १५० ।।

**(गुणवाक्यानामनुवादकत्वे श्रुतिसूत्रवैय्यर्थ्यापादनम्)**

गुणवाक्यानामनुवादकत्वे दोषान्तरमाह - **निषेधेति** ।

**निषेधायानुवादे हि व्यवहारोऽपि ते कथम् ।**
**निषेधाय ह्यनुख्यातो यथा विप्रवधस्तथा ।। १५१ ।।**

यथा 'ब्राह्मणो न हन्तव्य' इत्यत्र निषेधायानूदितब्राह्मणहननं व्यावहारिकं न सिद्ध्यति तथा निषेधायानूदिता गुणा व्यावहारिकाः न सिद्ध्येयुरित्यर्थः । अनुख्यातोऽनूदितः ।। १५१ ।।

**जर्त्तिलानां यथा होमसाधनत्वं न सिद्ध्यति ।**
**व्यवहारेऽपि नेशस्य स्युस्तात्पर्यस्य वर्जनात् ।। १५२ ।।**

यदि गुणवाक्यानामनुवादकत्वमेव न गुणे तात्पर्यं, तदा 'जर्त्तिलयवाग्वा जुहुयाद् गवेधुकयवाग्वा वा जुहुयात्' इत्यस्याजक्षीरेण जुहोतीत्येतदर्थवादस्य स्वार्थे तात्पर्याभावाज्जर्त्तिलादेर्नाहुतिसाधनत्वं यथा तथा व्यावहारिका अपि गुणा ब्रह्मणो न स्युरित्यर्थः । तथा च 'बृहन्तो ह्यस्मिन् गुणाः' "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "सत्यः सो अस्य महिमा' 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः' (बृ.उ.४.४.१२) य आत्माऽपहतपाप्मा सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य'

(छां.उ.८.४.१) इत्यादि श्रुतीनां -

'ब्रह्मेशानादिभिर्देवैः समेतैर्यद्गुणांशकः ।
नावसाययितुं शक्यः व्याचक्षाणैश्च सर्वदा' ।
'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' ।
'तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिः' ।

'परः पराणाम्' (वि.पु.अ.८) इत्यादिस्मृतीनाम् "अन्तस्तद्धर्मोपदेशात्" (ब्र.सू.१.१.२०) "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" (ब्र.सू.१.२.१८) "अदृश्यत्वादिगुणको धर्मोक्तेः" (ब्र.सू.१.२.२१) "सर्वधर्मोपपत्तेश्च" (ब्र.सू.२.१.३८) इत्यादिसूत्राणां च वैयर्थ्यापत्तेः ।।१५२।।

**(श्रुतीनां निर्गुणे तात्पर्ये समन्वयाध्यायवैयर्थ्यापादनम्)**

**श्रुतितात्पर्यगम्यस्य निर्गुणत्वे भवेद्वृथा ।**
**समन्वयपरोऽध्यायः सर्वसिद्धान्तसम्मतः ।। १५३ ।।**

श्रुतीनां निर्गुणे तात्पर्याङ्गीकारे समन्वयप्रतिपादकत्वेन सर्वसम्मतः प्रथमाध्यायो व्यर्थः स्यात् ।। १५३ ।।

समन्वयाध्यायविरोधं स्पष्टयति - **नेति** ।

**न प्रवृत्तिनिमित्तं हि विना शब्दः प्रवर्त्तते ।**
**लिङ्गानि स्पष्टमुक्तान्यनन्तत्वादीनि तत्र हि ।। १५४ ।।**

प्रवृत्तिनिमित्तं विना शब्दस्य न कुत्राऽपि प्रवृत्तिः । तत्तदधिकरणेषु पूर्वपक्ष्यभिमताकाशादिव्यावृत्तानि ब्रह्मैकगतान्यनन्तत्वादिलिङ्गानि स्पष्टमुक्तानि ।। १५४ ।।

**प्रत्यधिकृति भिन्नानि शब्दानां हि प्रवृत्तये ।**
**पर्यायतान्यथा स्याद्वै श्रुतीनामितरेतरम् ।। १५५ ।।**

प्रवृत्तिनिमित्तभेदानङ्गीकारे ब्रह्मपरसर्ववेदानां पर्यायता स्यात् ।। १५५ ।।

समन्वयाध्यायाधिकरणानि प्राधान्येनाऽनेकानि विनिर्दिशति - **अन्तर्याय इति** ।

**अन्तर्यामे तथाऽऽकाशे प्राणादिज्योतिरादितः ।**
**तथा वैश्वानरादीनां स्फुटो विष्णौ समन्वयः ।। १५६ ।।**

इन्द्रादिशब्दा अन्तरधिकरणे प्राणज्योतिराद्यधिकरणेषु प्राणज्योतिराद्या एवमन्ये शब्दा अन्येष्वधिकरणेषु हरौ समन्विताः ।। १५६ ।।

**(सर्वशब्दलक्ष्यत्वे ब्रह्मण असत्यत्वापत्तिः)**

**सत्यज्ञानादिशब्दानां स्याद्वैयर्थ्यं विशेषतः ।**
**ब्रह्मबोधस्य चैकेन पदेन सम्भवात्स्फुटम् ।। १५७ ।।**

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२.१) इत्यादि वाक्यस्थपदानां वैयर्थ्यं स्यात् । स्वरूपमात्रबोधस्यैकब्रह्मादिपदेनैव बोधसम्भवात् । न च सत्यत्वादिधर्मविशिष्टं ब्रह्म तत्तत्पदैर्वाच्यम् । शुद्धं तु विनिगमनाविरहात्सर्वपदलक्ष्यमिति वाच्यम् । त्वन्मते विशिष्टस्य मृषाभूतस्य परिच्छिन्नस्य सत्यत्वाद्यसम्भवात् । गङ्गापदलक्ष्यस्य तीरस्यागङ्गात्ववत्सत्यादिपदलक्ष्यस्यासत्यत्वाद्यापत्तेश्च । न जहदजहत्स्वार्थलक्षणाङ्गीकारेण नासत्यत्वाद्यापत्तिः । सत्यत्वादिविशिष्टवाचकानां पदानां व्यक्तिमात्रे लक्षणाया असम्भवात् । न हि घटत्वविशिष्टवाचकपदस्य घटव्यक्तौ लक्षणा युज्यते । शक्यादन्येन प्रकारेण बोधे हि लक्षणा । अतो लक्षणासार्थक्यायाकामेन त्वया ब्रह्मासत्याद्यंशभानमङ्गीकार्यम् ।। १५७ ।।

**(ब्रह्मणि धर्मसामान्यनिषेधे व्याहतिः)**

ब्रह्मणि धर्मसामान्यनिषेधो व्याहत इत्याह - **धर्माभावोऽपीति** ।

**धर्माभावोऽपि धर्मः स्यात् धर्मसामान्यशून्यता ।**
**वस्तुनि व्याहता श्रौते मूकोऽहं हीतिवत्स्फुटम् ।। १५८ ।।**

धर्माभावोऽपि धर्म इति धर्मसामान्याभावबोधनं व्याहतमित्यर्थः ।। १५८ ।।

(गुणनिषेधश्रुतीनां व्यवस्थानिरूपणम्)

ननु कथं तर्हि गुणनिषेधश्रुतीनामुपपत्तिस्तत्राह - **श्रुतीति** ।

**श्रुतिबोधितधर्माणां निषेधो न हि युज्यते ।**
**विकल्पो नास्ति वस्तूनामिति स्याद्धि व्यवस्थितिः ।।१५९।।**

वेदविहितब्रह्मधर्माणां निषेधो न सम्भवति । न वा विकल्पः । अनुष्ठाने विकल्पसम्भवेऽपि वस्तुनि तदभावात् । अतः श्रुतिद्वयस्य व्यवस्था वाच्या ।। १५९ ।।

श्रीवैष्णववाक्येन व्यवस्थामाह - **सत्त्वेति** ।

**सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।**
**इति मानानुरोधाद्धि प्राकृतानां निवारणम् ।। १६० ।।**

गुणश्रुतिभिरप्राकृता गुणा विधीयन्ते । निषेधश्रुतिभिः प्राकृताः सत्त्वादयो निषिद्ध्यन्त इति श्रुतिद्वयोपपत्तिः । न च गुणवाक्यैर्व्यावहारिका गुणा विधीयन्ते निषेधवाक्यैस्तत्त्वतो गुणा निषिद्ध्यन्त इति वाच्यम् । व्यावहारिका हि मिथ्याभूता एव । तथा च तद्बोधकश्रुतीनामप्रामाण्यमेव । समानसत्ताकविषयप्रतिपादकत्वेनैव प्रमाणानां व्यवस्थाया औचित्यात् । अन्यथा 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र नातिरात्रे षोडशिग्रहणं व्यावहारिकं तन्निषेधः परमार्थिक इति व्यवस्थापत्त्या मीमांसोच्छेदापत्तेः ।। १६० ।।

(गुणश्रुतेर्व्यावहारिकार्थपरत्वे सर्वशून्यतापत्तिः)

गुणश्रुतिर्व्यावहारिकार्थपरा निर्गुणश्रुतिस्तु तात्त्विकतदभावपरेत्यत्र बाधकान्तरमाह - **सदिति** ।

**सदेवेति श्रुतिः सत्त्वं लौकिकं ब्रह्मणो मृषा ।**
**असदेवेति शून्यत्वं वक्तीति स्याद्गतिः श्रुतेः ।। १६१ ।।**

'सदेव सोम्येदमग्र आसीत्' (छां.उ.६.२.१) 'तत्सत्यम्' इत्यादिब्रह्म-सत्त्वबोधिका श्रुतिर्मृषाभूतव्यावहारिकं सत्त्वं वक्ति । 'असदेव सोम्येद-मग्र आसीत्' (छां.उ.३.१९.१) इति श्रुतिस्तत्त्वतः शून्यं ब्रह्मणोऽसत्त्वं वक्तीति विरुद्धश्रुत्योर्गतिः स्यादित्यर्थः ।

एतेन गुणश्रुतिः सगुणब्रह्मपरा निर्गुणश्रुतिः परब्रह्मपरेति निरस्तम् । सगुणातिरिक्तब्रह्मणोऽलीकत्वाच्च -

'मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय' । (भ.गी.७.७)

'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य' । (भ.गी.११.४३)

इत्यादिस्मृतिविरोधापत्तेश्च । 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' (तै.उ.२.६) इति श्रुतिरपि नासत्त्वनिन्दार्था किन्तु शून्यतापत्तिरूपपरममो-क्षपरेत्यापत्तेश्च ।

'ज्ञानं नित्यं क्रिया नित्या बलं नित्यं परात्मनः' ।

'एष नित्यो महिमा ब्राह्मणस्य' (बृ.उ.४.४.२३) इति श्रुत्या नित्य-त्वोक्तेश्च । 'नावेदविन्मनुते तं बृहन्तम्' इति पूर्वत्र 'न कर्मणा वर्धते नो कनीयान् तस्यैव स्यात् पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन' (बृ.उ.४.४.२३) इत्युत्तरत्र च ब्रह्मणः प्रकृतत्वेन 'एष' इत्यस्य परब्रह्मपर-त्वात् । अन्यथा सदेवेति असदेवेति वाक्यद्वयानुरोधेन ब्रह्मेदानीं सत् कालान्तरे त्वसदिति स्यात् ।

न चौपाधिका धर्माः । 'स्वाभाविकी ज्ञानबलक्रिया च' इति विरोधा-पत्तेः । न च योगोपलब्धयोगिशक्त्यादिवैषम्यमात्रेण तदुपपत्तिः । सङ्कोचे मानाभावेन नित्यत्वश्रुत्यनुसारेण स्वाभाविकज्ञानपदसमभि-

व्याहारेण चोपाधिमात्रनिषेधात् । अन्यथा ब्रह्मणः सत्त्वमौपाधिकमसत्त्वं तु स्वाभाविकमिति स्यात् ।। १६१ ।।

**(उपास्यमसत्यमिति न नियमः)**

ननु सगुणवाक्यं 'वाचं धेनुमुपासीत' इत्यादिवदुपासनार्थम् । उपासनायाः कर्त्तव्यत्वे गुणेषु च तात्पर्ये वाक्यभेदः स्यादित्यत आह - **उपासेति** ।

**उपासायै हि धर्मोक्तिरिति पक्षो न युज्यते ।**
**उपासापदहीनाश्च शब्दाः सन्ति गुणार्पकाः ।। १६२ ।।**

'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः' (मुं.उ.१.१.९) 'य आत्मा अपहतपाप्मा' (छां.उ.८.७.१३) 'सत्यकामः सत्यसङ्कल्प' (छां.उ.८.१.५) इत्यादिगुणवाक्यान्युपासनापदरहितानि सन्तीत्यर्थः । उपासापदरहितवाक्यस्यापि तत्परत्वकल्पने निर्गुणवाक्यस्याप्युपासापरत्वं स्यात् । 'आत्मेत्येवोपासीत' इत्यात्मनोऽप्युपास्यत्वोक्तेः ।

किञ्च "आनन्दादयः प्राधानस्य" (ब्र.सू.३.३.११) इति सूत्रे तद्योऽहमिति श्रुत्युक्तं जीवस्येश्वरत्वमीश्वरस्य च जीवत्वमुपास्यमिति परेणाप्युक्तम् । तथोत्तरतापनीये शैब्यप्रश्नेऽथ काठके माण्डूक्यादौ च सर्वत्र [1]निर्गुणोपास्तिरिति निर्गुणं ब्रह्माप्युपास्यमित्यप्युक्तम् । एवञ्चोपास्यत्वेऽप्यानन्दादेरिवैक्यस्येव निर्गुणब्रह्मण इव च सत्यकामत्वादेरपि [2]तात्त्विकतोपपत्तिः । उक्तं हि परेण व्यतिहारसूत्रे (ब्र.सू.शा.भा.३.३.३७) 'यथा ध्यानार्थेऽपि सत्यकामत्वाद्युपदेशो तद्गुण ईश्वरः सिद्ध्यति तद्वदैक्यम्' इति । 'य आत्माऽपहतपाप्मा' इत्यारभ्य 'सत्यकामः सत्यसङ्कल्पः स

---

१. निर्गुणोक्ति. ख.

२. तात्त्विकत्वापत्तिः. ख.

विजिज्ञासितव्य' (छां.उ. ८.१.५) इति सत्यकामत्वादीनामपहतपाप्मत्वादिभिः सह जिज्ञास्यत्वोक्तेः। अपहतपाप्मत्वादीनामप्युपास्यत्वे तस्य भूताकाशे सम्भवेन दहराकाशस्य ब्रह्मत्वप्रतिपादकदहराधिकरणविरोधः स्यात् । 'एष सर्वेश्वर एष भूताधिपतिः' (बृ.उ.४.४.२१) इत्यादिधर्मानुक्त्वा तेषां 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ.उ.४.४.२२) इति मुमुक्षुज्ञेयत्वोक्तेश्च । 'यः सर्वज्ञः स सर्वविद्यस्यैष महिमा भुवि' इत्याद्युक्त्वा 'तद्विज्ञानेन परिपश्यन्ति धीरा' (मुं.उ.२.२.७) इत्यपरोक्षप्रमाविषयत्वोक्तेश्च । 'तुरीयं सर्वदृक् सदा' इति तुरीयसार्वज्ञ्योक्तेश्च ।। १६२ ।।

सगुणज्ञानादेव मोक्ष इत्यत्र स्मृतिमुदाहरति -

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।। १६३ ।।**

**(गुणवाचकश्रुतीनामुपासनार्थत्वे समन्वयाध्यायानारम्भापादनम्)**

**[1]उच्छिद्येतान्यथाऽध्यायो गिरामन्वयबोधकः ।**
**ईक्षितृत्वादिधर्माणां प्रधानादावुपासनात् ।। १६४ ।।**

अन्यथा गुणगिरामुपासार्थत्वे गिरां शब्दानां मुख्यवृत्त्या ब्रह्मण्यन्वयायाध्यायानारम्भः स्यात् । 'सदेव सोम्य' (छां.उ.६.२.१) इति सत्पदेन साङ्ख्याभिमतं प्रधानं बोध्यत इति पूर्वपक्षं कृत्वा 'स ऐक्षत' (बृ.उ. १.२.५) इति सत्पदार्थस्येक्षितृत्वश्रवणान्न तत्प्रधानं, [2]तस्येक्षितृत्वासम्भवात्, किन्तु ब्रह्मैव, तत्सम्भवादिति सिद्धान्तितम् । तत्सर्वमसङ्गतं स्यात् । ईक्षितृत्वारोपस्य जडेऽपि सम्भवात् । पूर्वम् 'एषोऽनन्त' इत्यु-

१. उच्छिद्येतान्य अध्यायो. ख.

२. तस्येक्षणासम्भवात्. ख.

क्तानन्तत्वस्य भूताकाशेऽप्यारोपसम्भवेनाकाशादिशब्दानां ब्रह्मपरत्वं बोधयतामाकाशाद्यधिकरणानामुच्छेदः स्यात् । एवमधिकरणान्तराणामपि पूर्वपक्ष्यभिमतार्थस्यारोपेणोपासनसम्भवेनोच्छेदः ।

न च यथा राजसदृशे अमात्य एव राजत्वारोपो न तु स्तम्बे तथा शुद्धचैतन्यसदृशे विशिष्टचैतन्य एवेक्षितृत्वाद्यारोपो न जडे प्रधानादाविति वाच्यम् । [1]अनाहार्यारोपस्य सादृश्यज्ञानहेतुकस्य तथा नियमेऽप्याहार्यारोपस्य सादृश्यज्ञानाहेतुकस्य तथा नियमाभावात् । उपासनं हि बाधकालीनेच्छाजन्याहार्यरूपं बुद्धिपूर्वकारोपरूपम् । तत्र सादृश्यधियोऽकिञ्चित्करत्वात् । अन्यथा 'नाम ब्रह्मोपासीत' 'वाचं धेनुमुपासीत' 'योषितमग्निं ध्यायीत' इत्यादीनामुपासावाक्यानामुच्छेदापत्तेः । न ह्यत्र सादृश्यं विद्यते यथा कथञ्चित्सादृश्यकल्पनं तु ब्रह्मप्रधानाद्योरपि सम्भवति । उपासाया अनाहार्यज्ञानत्वे कृतिसाध्यत्वं न स्यात् । ज्ञानस्य त्वया [2]कृतिसाध्यत्वानङ्गीकारात् । उपासायां तदङ्गीकाराच्च ।। १६३-१६४ ।।

**(सगुणज्ञानादेव प्रसादमोक्षौ जीवस्य)**

**गुणज्ञानात्प्रसादः स्यान्नान्यथा मोचको हरेः ।**
**गुणहीने न दृष्टा हि लोके भक्तिर्हि कुत्रचित् ।। १६५ ।।**

[3]सदनन्तगुणविशिष्टहरिज्ञानात्तन्महाप्रसादः । ततो मोक्षः
'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' । (भ.गी.७.१७)

इति स्मृत्या सगुणज्ञानस्य प्रसादे हेतुत्वोक्तेः । हि प्रसिद्धं लोके गुणज्ञानादेव वस्तुनि स्नेहो भवति ।। १६५ ।।

---

१. आहार्यारोपस्य. ख.

२. कृत्यसाध्य. ख.

३. सदानन्त. ख.

स्मृतिमुदाहरति - **य इति** ।

**यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम् ।**
**जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं न चान्यथा ।। १६६ ।।**

यथार्थज्ञानं हि तत्त्वज्ञानम् । तदेव मोक्षहेतुः ।

'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' । (भ.गी.१८.२५)

इति स्मृतेः । तद्वत् दोषाभाववत् सद्गुणविशिष्टस्य हरेर्ज्ञानम् ।। १६६ ।।

**(विष्णोर्निर्दोषगुणपूर्णत्वं प्रमाणसिद्धम्)**

ननु दोषाभावादिविशिष्टज्ञानं यथार्थं स्याद्यदि हरिर्दोषाभावविशिष्टोऽनन्तगुणविशिष्टश्च स्यात्तदभावे तु न । मानाभावादित्याशङ्कामपाकर्त्तुं वैष्णवं वाक्यमुदाहरति - **एवमिति** ।

**एवंप्रकारममलं नित्यं व्यापकमक्षयम् ।**
**समस्तहेयरहितं विष्णाख्यं परमं पदम् ।। १६७ ।।**

एवंप्रकारमनन्तगुणविशिष्टं समस्तहेयशून्यं विष्णुसंज्ञं पद्यते मुमुक्षुभिर्ज्ञायते मुक्तैश्च प्राप्यत इति पदम् स्वरूपमित्यर्थः ।।१६७।।

**तत्र यः परमात्मा स हि नित्यं निर्गुणः स्मृतः ।**
**स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ।। १६८ ।।**

निर्गुणत्वं प्राकृतगुणराहित्यम् । अन्यथा तस्य परमत्वानुपपत्तिः । न हि गुणाधिक्यातिरिक्तं परमत्वमस्ति ।

'सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणा' ।

इति वैष्णवोक्तेः ।। १६८ ।।

(ईशगुणानां मानान्तराप्राप्तत्वेनानुवादनिषेधादि न सम्भवति)

**गुणाभावश्रुतावस्ति गुणावेदकगीः स्फुटम् ।**
**धर्माभावोऽपि धर्मः स्याद्धर्मिज्ञानं विरोधि न ।। १६९ ।।**

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ।।
(श्वे.उ.६.११)

इति निर्गुणपदघटितवाक्येन साक्षित्वादयो धर्मा विधीयन्ते । न च निर्गुण इति [1]निषेधायानुवादो गुणशब्दस्य इति वाच्यम् । ब्रह्मगुणानां [2]मानान्तराप्राप्तत्वेनानुवादासम्भवात् । श्रुतिप्राप्तस्य श्रुत्याऽनुवादे 'सदेव सोम्येदमग्र आसीत्' इत्यादिप्राप्तसत्त्वम् 'असद्वा इदमग्र आसीत्' (तै.उ.२.७) इति निषेधाय 'तत्सत्यम्' इति श्रुतिरनुवदतीति स्यात् । गुणाभावस्यापि गुणत्वेन गुणसामान्यनिषेधस्य व्याहतत्वात्।

ननु निर्गुणवाक्यं न गुणाभावपरम् । किन्तु लक्षणयाऽखण्डचिन्मात्रपरमिति । तत्राह - **धर्मिमात्रज्ञानं हि इति** । धर्मतदभावान्यतरज्ञानं न विरुणद्धि । न हि भूतलज्ञानं घटस्य तदभावस्य वा तत्र ज्ञानं विरुणद्धि ।। १६९ ।।

(भक्तिर्मुक्तिहेतुभूता गुणाधिक्यज्ञानजा च)

'भक्त्या मामभिजानाति यावान्यश्चाऽस्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' । (भ.गी.१८.५५)

इत्याद्यागमेन ज्ञानप्रसादद्वारा भक्तेर्मोक्षहेतुत्वमुक्तम् । भक्तिश्च गुणाधिक्यज्ञानादेवेत्याह - **गुणेति** ।

---

१. निषेध्यानुवादो. क.

२. मानप्राप्ते अनुवादसम्भवात्.. ख.

**गुणाधिक्यधिया दृष्टं स्नेहाधिक्यं हि लोकतः ।**
**अतोऽनन्तगुणा विष्णौ बोध्यन्ते भक्तिवृद्धये ।। १७० ।।**

लोकतो लोके हि प्रसिद्धं गुणाधिक्यज्ञानात्स्नेहाधिक्यम् । अतः श्रुतिभिरनन्ता गुणा हरौ भक्तिविवृद्धये बोध्यन्ते ।। १७० ।।

**(भक्तिस्वरूपम्)**

भक्तिस्वरूपमाह - **सर्वोत्तमत्वेति** ।

**सर्वोत्तमत्वधीयुक्ताऽविच्छिन्ना स्नेहसन्ततिः ।**
**हरेः प्रसादिका भक्तिः सा गुणाधिक्यबोधतः ।। १७१ ।।**

नन्वस्तु सर्वोत्तमत्वज्ञानं स्नेहाधिक्ये हेतुर्गुणाधिक्यं हरेः कथं लब्धं तत्राह - **गुणेति** ।

**गुणाधिक्यं विहायान्यत्सर्वोत्तमत्वमेव न ।**
**हेयं लोके हि नैर्गुण्यं सर्वत्र दृश्यते स्फुटम् ।। १७२ ।।**

[1]सर्वाधिकगुणवत्त्वमेव लोके सर्वोत्तमत्वं नान्यत् । सर्वशब्दो लोके प्रकरणाद्यपेक्षया सङ्कोचार्हः । हरौ त्वसङ्कुचितः । नैर्गुण्यं तु लोके हेयं स्पष्टं दृष्टम् ।। ७२ ।।

अलौकिकवस्तुनो हरेर्ज्ञानमसाधारणलक्षणज्ञानेन स्यादिति विश्वोदयादिकर्तृत्वं तस्य स्वरूपलक्षणम् । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयत्यभिसंविशन्ति' (तै.उ.३.१) इत्याद्युक्त-[2]स्वरूपलक्षणान्येवेत्याह - **विश्वेति** ।

**विश्वोदयादिकर्तृत्वं भवेत्स्वरूपलक्षणम् ।**
**मुमुक्षूणां सदा ज्ञेयं यथाऽऽनन्दादिका गुणाः ।। १७३ ।।**

---

१. अधिकेति ख कोशे नास्ति ।   २. स्वलक्षणा. ख.

यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२.१) इत्याद्युक्तसत्यत्वादीनि स्वरूपलक्षणानि मुमुक्षुज्ञे तथा कर्तृत्वादीन्यपीत्यर्थः ।। १७३ ।।

**(जगत्कर्तृत्वं हरेः स्वरूपलक्षणम्)**

ननु यथा 'शाखायां चन्द्र' इत्यत्र शाखा तटस्थतया चन्द्रोपलक्षणं तथा विश्वोदयादिकर्तृत्वं तटस्थं तत्राह - **कर्तृत्वेति** ।

**कर्तृत्वादेस्तटस्थत्वे स्युरानन्दादिकास्तथा ।**
**श्रौतानामपि सर्वेषां तारतम्यं तथा कुतः ।। १७४ ।।**

श्रुतिविहितानां कर्तृत्वादीनां तटस्थत्वे 'सत्यं ज्ञानम्' इत्युक्तानां सत्यत्वादीनामपि तत्त्वापत्तेः । अज्ञातज्ञापकश्रुतिविहितानां तारतम्यस्यासम्भवात् ।

किञ्च सत्यत्वादीनां स्वरूपभिन्नत्वे परमते मिथ्यात्वापत्त्या कर्तृत्वतुल्यत्वम् । स्वरूपात्मकत्वे लक्षणत्वक्षतिः । न हि घटो घटस्य लक्षणम्। अस्मन्मते यावद्द्रव्यभावित्वरूपं स्वरूपलक्षणत्वमुभयोस्तुल्यम् ।

न च यावद्द्रव्यभावित्वं स्वरूपलक्षणत्वं घटरूपादावव्याप्तमिति वाच्यम् । रूपत्वेनैव हि रूपस्य घटादिस्वरूपलक्षणत्वम् । तेन रूपेण रूपस्य यावद्द्रव्यभावित्वमस्त्येव । रूपं विना घटाद्यवस्थानाभावात् । निर्गुणद्रव्योत्पत्तिप्रवादस्याप्रामाणिकत्वात् । रूपस्य शुक्लत्वश्यामत्वादिनाऽयावद्द्रव्यभाविरूपेण तूपलक्षणत्वमेव ।

किञ्च शाखोपस्थाप्यचन्द्रनिष्ठप्रकाशवन्निर्विशेषवादे कर्तृत्वाद्युपस्थाप्यधर्माभावेन शाखाया इवोपलक्षणत्वासम्भवात् । धर्मान्तरमुपस्थाप्य व्यावर्त्तकं ह्युपलक्षणम् ।। १७४ ।।

अध्यायान्ते स्वेष्टदेवं नमस्करोति - **विश्वेति** ।

विश्वोदयादिकर्त्तारं हर्तारं भवसन्ततेः ।
श्रीभर्त्तारं प्रदातारं गिरां नौमि हयाननम् ।। १७५ ।।

*।। इति श्रुतिसिद्धान्तसङ्ग्रहे वनमालिमिश्रविरचिते*

*पञ्चमोऽध्यायः ।।*

## ।। अथ षष्ठोऽध्यायः ।।

**(साधनेषु वैराग्यस्य अवश्यसम्पाद्यत्वकथनम्)**

परमानन्दावाप्तिरूपमोक्षसाधनं हरिप्रसादस्तद्धेतुर्हरिभक्तिस्तत्र मुख्यं कारणं वैराग्यमित्यादौ वैराग्यमाह - **ऐहिकेति** ।

**गुरुरुवाच**

**ऐहिकामुष्मिका भोगाः नरकैः सदृशाः सदा ।**
**सर्वे चिन्त्या मुमुक्षूणां परमानन्दकाङ्क्षया ।। १ ।।**

ऐहिकाः स्रक्चन्दनवनितादिभिर्जन्याः आमुष्मिकाः अप्सर आदिसंयोगोद्भवाः सर्वे भोगा नरकैस्तुल्या मुमुक्षुभिश्चिन्तनीयाः । तेषामुभयेषां परमानन्दावाप्तिप्रतिबन्धकत्वान्नरकतुल्यता । ननूपलभ्यमानभोगे कथं विरागस्तत्राह परमानन्देति ।। १ ।।

**(श्रीहरिलोकव्यतिरिक्तलोकाः निरयसदृशाः)**

श्रीहरिलोकव्यतिरिक्तानां लोकानां निरयत्वप्रतिपादकभारतमुदाहरति - **अमूनीति** ।

**अमूनि यानि स्थानानि देवानां परमात्मनाम् ।**
**नानासंस्थानवर्णानि नानारूपफलानि वै ।।**
**आक्रीडा विविधा राजन् पद्मिन्यश्चैव काञ्चनीः ।। २ ।।**

**चतुर्णां लोकपालानां शुक्रस्याऽथ बृहस्पतेः ।**
**मरुतां विश्वदेवानां साध्यानामश्विनोरपि ।। ३ ।।**

परमे हरावात्मा मनो येषां तेषां देवानां हरिभक्तानां दिव्यानि कामचारीणी विमानानि सभास्तथा नाना संस्थानं रचना येषां तानि नानारूपाणि फलानि भोगाश्च येषु तानि ।। २ ।। ३ ।।

**रुद्रादित्यवसूनाञ्च तथान्येषां दिवौकसाम् ।**
**एते वै निरयास्तात स्थानस्य परमात्मनः ।। ४ ।।**

परमात्मनो हरेःस्थानस्य वैकुण्ठस्यापेक्षयैते लोका निरयाः संसृतिहेतवो नश्वराश्चेत्यर्थः ।। ४ ।।

**(हरिलोकः कालविकारशून्यो नित्यः)**

**अक्षयं चानिमित्तं च न च क्लेशसमावृतम् ।**
**अप्रहर्षमनानन्दमशोकं विगतक्रमम् ।। ५ ।।**

**अक्षयमिति** । ध्वंसाप्रतियोगित्वादक्षयम् ।। ५ ।।

हरिलोके कालप्रभावाभावेन तस्य नित्यत्वमित्याशयेनाह - **काल इति** ।

**कालः सम्पद्यते तत्र कालस्तत्र न वै प्रभुः ।**
**स कालस्य प्रभू राजन् स्वर्गस्यापि तथेश्वरः ।। ६ ।।**

वै प्रसिद्धं तत्र वैकुण्ठे कालो न सम्पद्यते न प्राप्नोति । तत्र हेतुमाह - ***कलयतीति*** कालो हरिस्तत्र प्रभुः । "कालः कलयतामहम्" (भ.गी. १०.३०) इति स्मृतेः । यद्वा कालो हरिस्तत्र सम्पद्यते रमादिभक्तान् रमयन् सदा मूर्त्तिविशेषेणास्तेऽतस्तत्र कालो मुहूर्त्तमासादिरूपस्तत्र प्रभुर्न भवतीत्यर्थः । एतदेवाह - **स कालस्येति** । स्वर्गस्य दुःखासम्भिन्नसुखस्य मुक्तैरनुभाव्यस्येश्वरः ।। ६ ।।

उक्तार्थं स्पष्टयति - **आत्मेति** ।

**आत्मा केवलतां प्राप्तस्तत्र गत्वा न शोचति ।**
**ईदृशं परमं स्थानं निरयास्ते च तादृशाः ।। ७ ।।**

केवलतां निरवद्यतां प्राप्त आत्मा जीवस्तत्र लोके गत्वा न शोचति । ईदृशं परमं स्थानं हरेः । ***तादृशाः*** प्रागुक्ता अन्ये ये ते । संसृतिहेतुत्त्वात् ।। ७ ।।

**(दुःखासम्भिन्ननित्यसुखराहित्यात् स्वर्गादिलोकाः हेयाः)**

ननु स्वर्गस्य कथं निरयत्वमित्यत आह - **एत इति** ।

**एते ते निरयाः प्रोक्ताः सर्व एव यथातथम् ।**
**तस्य स्थानवरस्येह सर्वे निरयसंज्ञिताः ।। ८ ।।**

तस्य हरेः स्थानश्रेष्ठस्यापेक्षया एते सर्वे निरया इत्यर्थः। लक्षाद्यधिपापेक्षया शताधिपतेर्निर्धनत्ववत् दुःखासम्भिन्ननिरतिशयमुक्तसुखापेक्षया निरयत्वमिति भावः ।। ८ ।।

उक्तार्थं स्पष्टमाह - **पुनरिति** ।

**पुनरावर्त्तनं येभ्यः निरयास्ते सुरालयाः ।**
**यद्गत्वा न निवर्त्तन्ते तद्धाम परमं हरेः ।। ९ ।।**

स्पष्टम् ।। ९ ।।

**(भोगानुकूल्येऽपि तस्यानित्यत्वविमर्शनेन वैराग्यं सम्पादनीयम्)**

नन्वत्यन्तभोगानुकूलयौवनाद्यवस्थाद्रव्यादिकं च प्राप्य कथं निर्वेदः कार्यस्तत्राह - **अनित्यमिति** ।

**अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।**
**आरोग्यं प्रियसम्वासो गृध्येत्तत्र न पण्डितः ।। १० ।।**

भोगसाधनयौवनादिकं सर्वं यतोऽनित्यमतः पण्डितस्तत्र न गृध्येत् स्पृहां न कुर्यात् ।। १० ।।

(संसारविमुक्तये ज्ञानदो गुरुराश्रयणीयः)

**शमादिसाधनैर्युक्तः सद्गुरुं प्राप्य भक्तिमान् ।**
**जिज्ञासेत परं ब्रह्म संसृत्युच्छित्तये सुधीः ।। ११ ।।**

'शान्तो दान्त उपरतस्तितिक्षुः' (सुबालोपनिषत्, ९.१४) 'स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' (मुं.उ.१.२.१२) 'आत्मन्येवात्मानं पश्येत्' (बृ.उ.४.२.२३) इत्यादि श्रुतेः आत्मनि हृदये आत्मानं हरिं पश्येत् श्रवणमनननिदिध्यासनादिनाऽपरोक्षीकुर्यादित्यर्थः । भगवदापरोक्ष्यान्मुक्तिः । "तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय" (तै.आ.३.१.३) इति श्रुतेः ।। ११ ।।

(जीवेशयोर्जडानां च भेद एव विचिन्त्यः)

ननु कथं जिज्ञास्यो हरिः स्वाभिन्नतया भिन्नतया वेति तत्राह - **अथेति** ।

**अथाज्ञतः प्राणभृतोऽल्पशक्तेर्जडाच्च भिन्नो हि मुमुक्षुवेद्यः ।**
**अभेदबुद्धिर्जडजीवयोश्च हरौ तयोः संसृतिदाऽनिशं स्यात्।।१२**

अथ शमदमादिसाधनोत्पत्त्यनन्तरं मुमुक्षुभिरल्पशक्तेरसर्वज्ञात्प्राणभृतो जीवाज्जडाच्च भिन्नो हरिर्जिज्ञास्यो वेद्यश्च । जीवजडयोः हरेरभेदस्य तयोर्जीवजडयोरभेदस्य हरौ वा या बुद्धिः सा निरन्तरं जन्ममरणरूपसंसृतिदा भवेदित्यर्थः । जीवेशाभेदज्ञानं यथाऽनर्थहेतुस्तथा 'तत्त्वमसि' इति वाक्यव्याख्यावसरे वक्ष्यते ।। १२ ।।

(राजाहमिति वदन् भृत्य इव ब्रह्माहमिति वदन् जीवः दण्ड्यः)

लोकप्रसिद्धो ह्ययमर्थ इत्याह - **यथेति** ।

**यथा स्वामितया राजा सेवितो हि प्रसीदति ।**
**सेवितो माधवस्तद्वत् भवबन्धापनोदकृत् ।। १३ ।।**

स्पष्टम् ।। १३ ।।

**राजाभावं ब्रुवाणो हि दण्ड्योऽहं नृप इत्यपि ।**
**ब्रह्माभावं तथा ब्रह्माहमिति ज्ञानवान् कुधीः ।। १४ ।।**

राजा नास्तीति राजाऽहमिति वा वदन् यथा दण्ड्यस्तथा मदन्य ईशो नास्तीति [1]ज्ञानवान् दण्ड्यः ।। १४ ।।

**(विष्णुसर्वोत्तमत्वज्ञानमेव मुक्तिनिदानं गुह्यं सम्पाद्यमुक्तं गीतायाम्)**

द्वाविमौ परुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्त्यव्यय ईश्वरः ।।
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत ।। (भ.गी.१५.१६-१९)

इति स्मृत्युक्तं क्षराक्षरपदवाच्यबद्धमुक्तजीवेभ्य उत्तमतया हरेर्ज्ञानं श्रेष्ठं भजनमिति तत्सङ्ग्रहमाह - **सर्वेति** ।

**सर्वोत्तमतया ज्ञानं भजनं परमं निजम् ।**
**गुह्यतमतया प्रोक्तं पार्थसारथिना स्फुटम् ।। १५ ।।**

निजं स्वीयं तादृशं ज्ञानमेवातिगोप्यभजनमुक्तम् ।। १५ ।।

तादृशज्ञानवानेव सम्यक् शास्त्रार्थज्ञः स एव कृतार्थ इत्यर्थम् -

---

१. क. कोशे अयं भागः नास्ति ।

'इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ।।'
(भ.गी.१५.२०)

इति स्मृत्योक्तं सङ्गृह्णाति - **पुरुषोत्तमतेति** ।

**पुरुषोत्तमताज्ञस्य ज्ञानित्वकृतकृत्यते ।**
**असंमूढत्वमप्युक्तं तज्ज्ञस्य हरिणा स्फुटम् ।। १६ ।।**

असंमूढत्वं यथार्थज्ञत्वम् ।। १६ ।।

**(मुमुक्षुज्ञेयभगवत्स्वरूपम्)**

मुमुक्षुज्ञेयस्वरूपमाह - **ज्ञानेति** ।

**ज्ञानानन्दादिभिर्धर्मैरनन्तैर्हरिरीश्वरः ।**
**युक्तो मुमुक्षुभिश्चिन्त्यो ज्ञेयः प्राप्यस्तथाविधः ।। १७ ।।**

जडजीवादिष्वविद्यमानैर्निरतिशयानन्तगुणैर्विशिष्टो हरिर्मुमुक्षुभिर्ध्येयो ज्ञेयः प्राप्यश्चेत्यर्थः ।। १७ ।।

उक्तार्थे स्मृतिमाह - **भोक्तारमिति** ।

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।। १८ ।।**

भोक्तारं पालयितारम् ।। १८ ।।

**('पृथगात्मानं' 'जुष्टं यदा' इत्यादि श्रुत्यभिप्रायकथनम्)**

"पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" (श्वे.उ. १२.१.६) इति श्रुतिं प्रेरयितृत्वादिगुणविशिष्टेश्वरस्य जीवाद्भिन्नतया ज्ञानान्मुक्तिं प्रतिपादयन्तीं सङ्गृह्णाति - **आत्मानमिति** ।

**आत्मानं हि पृथङ् मत्वा प्रेरकञ्च पृथग् हरिम् ।**
**तत्प्रसादयुतो जीवोऽमृतत्वं याति नापरः ।। १९ ।।**

अमृतत्वं मोक्षम् ।। १९ ।।

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति' (मुं.उ.३.१.२) इति श्रुतिं सङ्गृह्णाति - **मुक्तैरिति** ।

**मुक्तैर्जुष्टं यदा जीवः स्वस्मादन्यं महेश्वरम् ।**
**पश्येत्तदाऽऽप्नुयात्तस्य महिमानं विमुक्तिगः ।। २० ।।**

नित्यमुक्तै रमादिभिः साधनेन मुक्तैर्नन्दसुनन्दादिभिर्जीवन्मुक्तैर्ब्रह्मरुद्रादिभिश्च भक्तैर्जुष्टं सेवितं हरिं यदा स्वस्मादन्यं यो पश्यति तदा तत्प्रसादेन विमुक्तबन्धनः सन् तस्य तत्स्वामिकं निर्मुक्तत्वलक्षणं महिमानं प्राप्नोतीत्यर्थः ।। २० ।।

**(हरिणा परमसाम्यं पूर्णत्वमुक्तत्वादिना)**

'यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' ।।
(मुं.उ.३.१.३)

इति श्रुतिं सङ्गृह्णाति - **जीव इति** ।

**जीवः पश्यति कर्तारं रुक्मवर्णं महेश्वरम् ।**
**पुण्यपापे तदा हित्वाऽविद्याख्ये जनवर्जितः ।। २१ ।।**

पुण्यपापाख्यां कर्मरूपाविद्यां हित्वा हरेस्तुल्यतामेतीत्युत्तरेणाऽन्वयः । [1]जनवर्जितः जन्मवर्जितः ।। २१ ।।

---

१. क. कोशे अयं भागः नास्ति ।

**कीटभृङ्गनयेनैति तुल्यतां परमां हरेः ।**
**तत्प्रसादेन पूर्णत्वनिर्मुक्तत्वादिना बुधः ।। २२ ।।**

यथा कीटो भृङ्गं ध्यात्वा तत्तुल्यतां याति तथा हरिं ध्यात्वा ज्ञात्वा च जीवो निर्मुक्तत्वपूर्णत्वादिना तत्साम्यं यातीत्यर्थः ।। २२ ।।

अनन्तगुणविशिष्टं हरिम् 'एष सर्वेश्वर' (बृ.उ.४.४.२२) इत्यादिनोक्त्वा 'तमेतं वेदानुवचनेन' (बृ.उ.४.४.२१) इत्यादिना स एव जिज्ञास्य इत्युक्तम् । मुक्तप्राप्योऽपि स एव 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति श्रुत्या फलसाधनयोः सारूप्यस्याभिहितत्वादित्यर्थं सङ्गृह्णाति एष इति द्वाभ्याम् -

**एष सर्वेश्वरो ह्येष भूतानामधिपो हरिः ।**
**भूतपालो भवेदेष लोकानां धारको विभुः ।। २३ ।।**

श्रुतिरुदाहृता प्राक् ।। २३ ।।

**तमेतं ब्राह्मणा वेत्तुमिच्छेयुर्यजनादिभिः ।**
**यो जिज्ञास्यः स एव स्याज् ज्ञेयः प्राप्यश्च मुक्तिगैः ।। २४ ।।**

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' (बृ.उ.४.४.२२) इति श्रुतेः मुमुक्षुभिर्जिज्ञास्यो ज्ञेयश्च मुक्तैर्ज्ञेयः प्राप्यश्चेत्यर्थः ।। २४ ।।

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' ।।
(श्वेताश्वतर, ६.११)

इत्यादिश्रुतिं व्याख्याति - **मुख्यत्वादिति** ।

**मुख्यत्वादेक इत्युक्तो निर्गुणः प्राकृतोज्झितः ।**
**जीवं प्रत्यजया गूढो नित्यज्ञानमयो हरिः ।। २५ ।।**

मुख्यत्वादेकः । 'एके मुख्यान्यकेवला' इति कोशात् ।
'सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणा' ।

इति स्मृतेः प्राकृतगुणशून्यत्वान्निर्गुणः । अजयाऽविद्यया जीवं प्रति गूढ आवृतः ।। २५ ।।

**('यो वेद निहितं गुहायाम्' इति श्रुत्यभिप्रायकथनम्)**

'यो वेद निहितं गुहायां परमे व्योमन्' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिं सङ्गृह्णाति - **गुहाया-मिति** ।

**गुहायां निहितं वेद सत्यं ज्ञानमनन्तकम् ।**
**सोऽश्नुते सर्वकामान् वै ब्रह्मणा सह मुक्तिगः ।। २६ ।।**

ब्रह्मणा चतुर्मुखेन सर्वान् कामानश्नुते ।। २६ ।।

एतदेव स्पष्टयति - **मुक्तेरिति** ।

**मुक्तेः काले विधेः प्रोक्तं जीवान्तरविमोक्षणम् ।**
**ब्रह्मज्ञानफलं सर्वकामप्रायणलक्षणम् ।। २७ ।।**

'सह शाखया प्रस्तरं प्रहरति' इत्यत्र प्रस्तरेण सह प्रस्तरकाले अप्रसिद्धकालां शाखां प्रहरतीति विभक्तिव्यत्ययेन सहशब्दस्य कालार्थकत्वं वार्त्तिकादावुक्तमित्यत्रापि तथाऽस्तु । तथा च ब्रह्मणा सह ब्रह्मणो मुक्तिकाले सर्वान् कामानवाप्नोति स्वयोग्यतानुसारेण निरतिशयपूर्णतां प्राप्नोतीत्यर्थः ।। २७ ।।

**('रसो वै सः' इति श्रुत्यर्थवर्णनम्)**

'रसो वै सः' 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्यादिश्रुतिं सङ्गृह्णाति - **रस इति** ।

**रसो वै स रसं लब्ध्वाऽऽनन्दीभवत्ययं सुधीः ।**
**लब्धव्यो भगवान् विष्णुर्लब्धा जीवः प्रकीर्त्तितः ।। २८ ।।**

आनन्दी भवत्ययं सुधीः । अत्र लब्धृलब्धव्यभावेन जीवेशयोर्भेदः स्पष्टः ।। २८ ।।

**(श्रुतौ सर्वत्र जीवपरेशयोर्भेद एवोक्तः)**

**मीमांसन्ते सदोक्थेष्वेतम् बह्वृचास्तथाऽध्वर्यवः ।**
**अग्नौ हि सामगा दिवि वायावेनं तथा हरिम् ।। २९ ।।**

श्रुत्यानुपूर्वी प्रागुदाहृता । बह्वृचा ऋग्वेदिनः । अध्वर्यवो यजुर्वेदिनः ।। २९ ।।

**आकाशेऽप्स्वेतमौषध्याञ्चन्द्रे वनस्पतौ तथा ।**
**नक्षत्रेषु तथैतं हि सर्वभूतेषु सर्वदा ।। ३० ।।**

ओषध्यामोषधीषु । वनस्पतौ वनस्पतिषु । एतं व्याप्तम् । अतो व्याप्यव्यापकभावेन विश्वपरेशयोर्भेदः स्पष्टः ।। ३० ।।

**(ब्रह्मविदाप्नोति इति श्रुत्यर्थनिरूपणम्)**

'ब्रह्मविदाप्नोति परम्' इति श्रुतेर्बृहद्गुणकत्वरूपब्रह्मत्वेन ज्ञानं मुक्तिहेतुरित्याशयेनाह - **सर्वव्यापीति** ।

**सर्वव्यापी हरिश्चिन्त्यस्तथा मोक्षप्रदायकः ।**
**सत्यत्वमपि विश्वस्य सिद्धं तद्व्यापनात्सदा ।। ३१ ।।**

सर्वव्यापकत्वं सर्वनियामकत्वाद्यनन्तगुणवत्त्वम् । मृषात्वे सर्वज्ञनि-

यम्यत्वासम्भवादिति विश्वस्य सत्यत्वसिद्धिः ।। ३१ ।।

**(तमेवं विदित्वेति श्रुत्यर्थसङ्ग्रहः)**

'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्यर्थं सङ्गृह्णाति - **नेति** ।

**न ज्ञातव्यौ मुमुक्षूणां प्राधान्याज्जडजीवकौ ।**
**ज्ञातव्यो भगवान् विष्णुः प्रसन्नो मोक्षदायकः ।। ३२ ।।**

यद्यपि देहादितो विविक्तत्वादिना जीवोऽपि ज्ञेयोऽन्यथा शास्त्रेऽनधिकारः स्यात् । न हि देहात्मधीमतां किमपि शास्त्रेण कृत्यमस्ति । ईश्वरनियम्यत्वादिना प्रधानादिकमपि ज्ञेयम् । ईश्वरत्वधियो नियम्यज्ञानसापेक्षत्वात् । तथापि मुमुक्षूणां प्राधान्येन हरिरेव ज्ञेयः । यतो ज्ञातः प्रसीदति प्रसन्नश्च मोक्षदो भवति । "एवं विज्ञातो भगवान् प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षय" इति स्मृतेः ।। ३२ ।।

'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' (मुं.उ.२.२.५) इति श्रुत्यर्थं सङ्गृह्णाति - **ब्रह्मेति** ।

**ब्रह्मान्यजडजीवादेर्मुमुक्षुज्ञेयता न हि ।**
**ब्रह्माराधनतोऽन्यो हि व्यापारो नोचितस्तथा ।। ३३ ।।**

जडादेरज्ञेयत्वं प्राधान्येन ।। ३३ ।।

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' (बृ.उ. ४.५.६) इति श्रुतिमुदाहरति - **आत्मेति** ।

**आत्मा श्रोतव्य इत्याद्याः श्रुतयः प्रवदन्ति हि ।**
**श्रोतव्यं मननीयञ्च निदिध्यास्यं रमाधवम् ।। ३४ ।।**

श्रवणादिविषयं रमापतिं वदन्तीत्यर्थः ।। ३४ ।।

(न जीवः श्रवणादिविषयः)

ननु 'आत्मनः कामाय सर्वं प्रियं भवति' इत्याद्युपक्रमानुरोधाज्जीव एव श्रवणादिविषयोऽस्त्वित्याशङ्कां निरस्यति - **तदिति** ।

**तदापरोक्ष्यतो मोक्षो न हि जीवापरोक्षतः ।**
**ब्रह्मविदाप्नुयान्मोक्षमिति प्राह श्रुतिः स्फुटम् ।। ३५ ।।**

हि यतस्तस्य हरेरापरोक्ष्यान्मोक्षो न जीवापरोक्ष्यादतः स एव साक्षात्कर्त्तव्यः श्रवणादिविषयश्च । न जीवः । तदापरोक्ष्यस्य सदैव सत्त्वात् मोक्षाहेतुत्वाच्च । 'ब्रह्मविदाप्नोति परम्' (तै.उ.२.१) इति ब्रह्मज्ञानादेव हि मोक्ष उक्तः । 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेताश्वतर,३.८) इत्यत्र तच्छब्देन सहस्रशीर्षत्वादिविशिष्टस्यैव परामर्शाच्च ।। ३५ ।।

(न कदापि जीवस्य ब्रह्मत्वं भवति)

ब्रह्मत्वं त्वीश्वरस्यैव न जीवस्येत्याह - **तदिति** ।

**तदेव परमं ब्रह्म कवीनां सम्मतं परम् ।**
**परं ब्रह्म परं धाम वदन्ति मुनयस्तथा ।। ३६ ।।**

'तदेव ब्रह्म परमं कवीनाम्' (म.ना.उ.१.६) इत्यादि श्रुतिभिरीशस्यैव ब्रह्मत्वमवधार्यते ।

'परं ब्रह्म परं धाम पवित्रं परमं भवान्' । (भ.गी.१०.१२)
'परमं यो महद्ब्रह्म परमं यः परायणम्' ।
(भारत-भीष्मपर्व-अ.२५८)

इत्यादिस्मृतिभिस्तथा ।। ३६ ।।

ननु 'द्वे ब्रह्मणी वेदितव्ये' इत्यादिश्रुत्या जीवस्यापि ब्रह्मत्वमुक्तमिति

चेत्सत्यमुक्तं परन्तु गौणं तदित्याह - **स्वतन्त्रेति** ।

**स्वतन्त्रब्रह्मतेशस्य जीवस्य तदधीनता ।**
**मुख्यब्रह्मधिया मोक्षो न गौणज्ञानतो भवेत् ।। ३७ ।।**

बृहद्गुणपूर्णत्वरूपा ब्रह्मता परेशस्य मुख्या । जीवस्य परेशाधीना गौणी सा । मुख्यब्रह्मताज्ञानादेव मोक्षो न तु गौणज्ञानादित्यर्थः ।। ३७ ।।

**यथार्थज्ञानतो मोक्षो न चायथार्थतः क्वचित् ।**
**यथार्था भेदधीरेव वस्तूनां हि परस्परम् ।। ३८ ।।**

'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' (भ.गी.१८.२५) इति स्मृत्या यथार्थज्ञानस्यैव मोचकत्वमुक्तम् । तच्चाल्पज्ञत्वादिगुणकजीवतद्विरुद्धगुणकेशयोर्भेदं विषयीकुर्वदेव स्यादित्यर्थः ।। ३८ ।।

**(जीवेशभेदोऽध्यक्षसिद्धः)**

जीवेशयोर्भेदे प्रत्यक्षप्रमाणमाह - **जीवेशयोरिति** ।

**जीवेशयोर्भिदैव स्यात्सत्याऽध्यक्षस्य गोचरः ।**
**नाहमीशो न सर्वज्ञो नादुःखाशोकभाक्तथा ।। ३९ ।।**

**जीवेशयोरिति** । नाहमीशो नाशोकभागित्यध्यक्षगोचरो भिदैव सत्या ।। ३९ ।।

**ईश्वरजीवयोर्भेदे साक्षी मानं समिष्यते ।**
**भेदाध्यक्षे हि योग्यत्वं सहकारितयेष्यते ।। ४० ।।**

साक्षाद् द्रष्टा जीवरूपसाक्षी जीवेशभेदे मानम् । साक्षिगृहीते सुखदुःखादौ संशयाद्यदर्शनात्स प्रमाणप्रबलः स्वीक्रियते । अभावप्रत्यक्षे सहकारिणीं योग्यानुपलब्धिमाह - **भेदेति** । प्रतियोगितावच्छेदकधर्मस्याधिकरणस्य च योग्यत्वं भेदप्रत्यक्षे सहकारिकारणं स्वीक्रियते । योग्यधर्माव-

च्छिन्नप्रतियोगिताकयोग्याधिकरणको भेदो योग्य इत्यर्थः ।। ४० ।।

नन्वीश्वरस्याप्रत्यक्षत्वात्कथं तद्भेदः प्रत्यक्षस्तत्राऽऽह - **नेति** ।

**न प्रतियोगिनस्तत्त्वमन्यथा न भवेत्क्वचित् ।**
**पिशाचादिभिदा या हि लौकिकञ्चाक्षुषं नृणाम् ।। ४१ ।।**

तत्त्वं योग्यत्वम् । अन्यथा प्रतियोग्यध्यक्षत्वस्याभावाध्यक्षे हेतुत्वे ।। ४१ ।।

**पिशाचत्वं तु योग्यं स्याज्जातेस्तादृशरूपतः ।**
**पिशाचवद्भिदायाः स्यादन्यथाऽध्यक्षता क्वचित् ।। ४२ ।।**

जातिमात्रस्य योग्यत्वेऽपि पिशाचाद्ययोग्यव्यक्तिसम्बन्धान्न गृह्यते । सैव चाक्षुषे स्तम्भे वर्त्तेत तर्हि गृह्येतैव । तथा च स्तम्भः पिशाचः स्याच्चेदुपलभ्येतेत्यापत्तिसम्भवात्तद्भेदस्तत्र योग्यः । स्तम्भः पिशाचवान् स्यात्तर्ह्युपलभ्येतेत्यापत्त्यसम्भवात्पिशाचवद्भेदो न योग्यः । स्तम्भस्याऽपिशाचवत्त्वेप्यनुपलम्भोपपत्तेः ।। ४२ ।।

ननु पिशाचत्वादेर्योग्यत्वे कदाचित्प्रत्यक्षं स्यात्तत्राह - **व्यक्तीति** ।

**व्यक्त्ययोग्यत्वतो न स्याज्जातेरध्यक्षता क्वचित् ।**
**प्रत्यक्षव्यक्तिवृत्तित्वात्तस्याः प्रत्यक्षमिष्यते ।। ४३ ।।**

पिशाचादिव्यक्तेरयोग्यत्वात्पिशाचत्वादिकं न गृह्यते । जातेः प्रत्यक्षादिव्यक्तिवृत्तितया प्रत्यक्षत्वनियमात् ।। ४३ ।।

दार्ष्टान्तिके सङ्गमयति - **अयोग्यत्वेऽपीति** ।

**अयोग्यत्वेऽपि हीशस्येश्वरत्वं योग्यमेव हि ।**
**ज्ञानेच्छाकृतिमत्त्वाद्यमीश्वरत्वमुदीरितम् ।। ४४ ।।**

ईशस्यायोग्यत्वेऽपि ज्ञानेच्छाकृतिमत्त्वादिलक्षणमीश्वरत्वं योग्यमेव । ज्ञानादीनां स्वीयानां प्रत्यक्षत्वनियमात् ।। ४४ ।।

**अतीन्द्रियं न हि ज्ञानेच्छाकृत्यादि भवेत्क्वचित् ।**
**सर्वज्ञोऽहं भवेयं च जानीयां सर्वमेव हि ।। ४५ ।।**

ज्ञानाद्यतीन्द्रियत्वे मानाभावः । मयि सर्वविषयकं ज्ञानादिकं स्यात्तर्हि तथोपलभ्येत । न चोपलभ्यतेऽतो न सर्वविषयकज्ञानादिमानहमित्यर्थः ।। ४५ ।।

ननु 'नाहं सर्वज्ञ' इत्यादिनान्तःकरणाद्यवच्छिन्ने जीवाख्ये मिथ्याभूते चैतन्ये सार्वज्ञ्यादिविशिष्टस्य तादृशस्यैवेश्वरस्य भेदः सिद्ध्यति । न तु परमार्थभूते शुद्धे भेदसिद्धिस्तत्राह - **अस्वाप्समिति** ।

**अस्वाप्संयोऽहमज्ञोऽहं संसारी दुःखसंयुतः ।**
**न सर्वज्ञो न वेशश्च निर्दुःखो न हि सर्वथा ।। ४६ ।।**

सुषुप्त्यज्ञानदुःखादिभोगसंसाराश्रयो हि शुद्ध एव ।। ४६ ।।

एतदेव स्पष्टयति - **संसारेति** ।

**संसाराद्याश्रये शुद्धे मोक्षशालिनि चेतने ।**
**भेदो गृह्यत ईशस्य साक्षिणा सर्वदा स्फुटम् ।। ४७ ।।**

**(जीवेशभेदस्य प्रत्यक्षसिद्धत्वेऽपि न श्रुतेरनुवादकत्वम्)**

ननु जीवेशभेदस्य प्रत्यक्षत्वे तद्बोधकश्रुतीनां वैयर्थ्यं स्यात्तत्राह - **वर्त्तमानेति** ।

**वर्त्तमानतयाऽध्यक्षं भेदं गृह्णाति नान्यदा ।**
**श्रुतिस्त्रैकालिकं भेदं ब्रुवती नानुवादिनी ।। ४८ ।।**

अध्यक्षं वर्त्तमानतया भेदं गृह्णाति । श्रुतिस्तु कालत्रयेऽपि भेदं प्रति-

पादयन्ती कथमनुवादिनी भवेत् । अपि च ईशप्रतियोगिकजीवधर्मिकभेदस्य प्रत्यक्षत्वेऽपि जीवप्रतियोगिकेशधर्मिकभेदो न प्रत्यक्ष इति नानुवादिनी श्रुतिः । [1]किञ्च प्रत्यक्षस्य प्रमाणत्वेऽस्तु श्रुतिर्नित्यानुवादिनी । तस्याप्रमाणत्वे तु नानुवादिनी श्रुतिः । न ह्यप्रमाणगृहीतग्राहित्वेनानुवादकत्वं सम्भवति । ईश्वरभेदस्य प्रत्यक्षत्वेऽपीश्वरस्याप्रत्यक्षत्वेन तत्प्रतिपादकतया वेदान्तानां सार्थक्यम् । श्रवणमनननिदिध्यासनैरीश्वरस्यापरोक्ष्यं भवतीति शास्त्रं सार्थकम् । परोक्षस्यापि षड्जादेः श्रवणमननादिनाऽपरोक्षत्ववत्परोक्षस्यापीश्वरस्य श्रवणादिनाऽपरोक्षत्वसम्भवः ।। ४८ ।।

**(जीवस्येशाभेदे हिताकरणमहितकरणं च नोपपद्यते)**

जीवेशयोरभेदे बाधकमाह - **जीव इति** ।

**जीवो यदीश्वराभिन्नो नाऽऽचरेत्स्वाहितं क्वचित् ।**
**हितानाचरणं नैव सम्भवेत्तस्य कुत्रचित् ।। ४९ ।।**

जीवो यदि स्वतन्त्रेश्वराभिन्नः स्यात्तर्हि स्वाहिताचरणं स्वहितानाचरणं च कदाचिन्न कुर्यादित्यर्थः ।। ४९ ।।

**(उपाधिभेदेन सर्वज्ञत्वादि न घटते)**

ननूपाधिभेदेन भिन्नस्य सर्वज्ञत्वादिकमेकस्यैवोपपद्यत इत्यत आह - **वन्ध्यात्वेति** ।

**वन्ध्यात्वमातृत्वादीनां स्यात्समावेशनं क्वचित् ।**
**लोके विरोधवार्त्ता हि दत्तजलाञ्जलिर्भवेत् ।। ५० ।।**

सर्वज्ञत्वादिवदुष्णत्वशीतत्वादिकं सत्यत्वमिथ्यात्वशून्यत्वादिकमप्युपाधिभेदेनैकत्र समाविष्टं स्यात् । तथा च ब्रह्मैतत्कालावच्छेदेन सदशून्यं

१. एतौ वाक्यौ ख कोशे न दृश्येते ।

च कालान्तरावच्छेदेनासच्छून्यं च स्यात् ।। ५० ।।

**निर्दोषत्वं ब्रुवन्तीनां नित्यं वै जगदीश्वरे ।**
**पीडनं हि श्रुतीनां स्यान्नरकं दोषदर्शिनाम् ।। ५१ ।।**

जीवेशाभेदाङ्गीकारे जगदीश्वरे नित्यं निर्दोषत्वं सर्वदैवास्पृष्टदोषगन्धत्वं ब्रुवन्तीनां 'निरवद्यं निरञ्जनम्' इत्यादिश्रुतीनां पीडनमप्रामाण्यं स्यात् । जीवाभेदेन भगवत्यज्ञत्वादिदोषदर्शिनां नरकप्राप्तिरेव स्यात् ।

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् । (भ.गी.१६.१९)

इतिस्मृतेः ।। ५१ ।।

**(अजामेकाम् इति श्रुत्यर्थवर्णनम्)**

'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगाम् अजोऽन्यः' (महाना.८.४) इति वाक्यं भेदप्रतिपादकमुदाहरति - **जुषमाणम् इति** ।

**जुषमाणोऽनुशेते यामेकोऽजो जीवसंज्ञकः ।**
**जहाति भुक्तभोगां तामन्योऽजः सदैवेश्वरः ।। ५२ ।।**

भुक्तो भोगो जीवेन यया तामीश्वरः सदैव जहाति । सदानावृतपूर्णानन्दत्वात् । जीवपूर्णानन्दत्वस्य संसारदशायामविद्ययाऽऽवृतत्वेन सम्भवत्यजया प्रकृत्या जीवस्य सुखादिभोगः । भेदबोधकमेकान्यादिपदमत्रास्ति ।। ५२ ।।

**('ज्ञाज्ञौ' 'द्वासुपर्णा' इति श्रुत्यर्थवर्णनम्)**

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेताश्वतर, १.९) 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुं.उ.३.१.१) इति वाक्यमुदाहरति - **ईशेति** ।

**ईशानीशौ तथा ज्ञाज्ञौ द्वौ सुपर्णाविव द्रुमे ।**
**सखायौ सर्वदाऽऽसाते यौ चिदानन्दरूपिणौ ।। ५३ ।।**

द्रुमे हृदयाख्ये सदैवासाते । सखित्वं समानरूपत्वम् । तत्तु चिदानन्दत्वादिना [1]तामसराजसानां चित्त्वेन ।। ५३ ।।

भोगाभोगौ स्पष्टयति - **तयोरिति** ।

**तयोरेकः फलं भुङ्क्ते कर्मणां स्वादु सक्तितः ।**
**नान्योऽनासक्तितो भुङ्क्ते चकास्ति स्वप्रकाशतः ।। ५४ ।।**

एको जीवः आसक्त्या कर्मणां स्वादु यथा स्यात्तथा भुङ्क्ते । अन्य ईश्वरो न भुङ्क्ते । आसक्तिशून्यत्वात् । स्वप्रकाशत्वाच्चकास्ति ।। ५४ ।।

**(इन्द्रस्यात्मा इति श्रुत्युदाहरणम्)**

'इन्द्रस्यात्मा विदितः पञ्चहोता वायोरात्मानं कवयो निचिक्युः अन्तरादित्ये मनसा चरन्तं देवानां हृदयं ब्रह्माऽन्वविन्दत्' (चित्त्युपत्ति.उप. ११.३) इत्यादि श्रुतिमुदाहरति - **य इति** ।

**यश्चायं पुरुषे यश्चासावादित्ये स एककः ।**
**इन्द्रस्यात्मा तथा वायोरात्माऽऽदित्ये स्थितं हरिम् ।। ५५ ।।**

पुरुषे जीवान्तरेऽन्तर्यामितया वर्त्तते स एवादित्ये वर्त्तत इत्यर्थः ।

---

१. ख कोशे अधिकं वाक्यम् ।

इन्द्रवाय्वादेरात्माऽन्तर्यामीत्यर्थः ।। ५५ ।।

**देवानां हृदयं ब्रह्मा मनसा ज्ञातवान् प्रभुः ।**
**भेदपरत्वमेतेषामुक्तं सूत्रकृता स्फुटम् ।। ५६ ।।**

'देवानां हृदयमन्तर्यामिणम् । 'भेदव्यपदेशाच्चान्य' (ब्र.सू.१.१.२१) इति सूत्रयता भगवता आसां भेदपरत्वमुक्तम् ।। ५६ ।।

**('य आत्मनि' इति श्रुत्यर्थकथनम्)**

'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति यमात्मा न वेद' 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यम्' (बृ.उ.५.७) इत्याद्यन्तर्यामिब्राह्मणं जीवेशभेदप्रतिपादकमुदाहरति - **तिष्ठतीति** ।

**तिष्ठत्यात्मनि यस्यात्मा देह आत्मा न वेद यम् ।**
**तिष्ठति यो हि विज्ञाने विज्ञानं यं न वेद ह ।। ५७ ।।**

आत्मविज्ञानपदार्थो जीवो यस्य शरीरं शरीरवन्नियम्यः स जीवो 'यं न वेद' इत्याद्यन्तर्यामिब्राह्मणेन भेदः प्रतिपादितः ।। ५७ ।।

नन्वत्र भेदबोधकपदं नास्तीत्याशङ्क्यैतद्वाक्यानां जीवेशभेदपरत्वमित्याशयेनाह - **काण्वा इति** ।

**काण्वा माध्यन्दिनाश्चेत्थमन्तर्याम्यसुधारिणोः ।**
**अधीयते भिदां सत्यामित्याह सूत्रकृत्स्वयम् ।। ५८ ।।**

'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' (ब्र.सू. १.२.२०) इति हि सूत्रम् । उभये काण्वा माध्यन्दिनाश्चैनं शारीरमन्तर्यामिणः सकाशाद्भेदेनैवाधीयते पठन्ति । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत' (बृ.उ.५.७) इति माध्यन्दिना 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं

विज्ञानं न वेद यस्य विज्ञानं शरीरम्' इति हि काण्वाः ।। ५८ ।।

'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिमुदाहरति - **अस्मादिति** ।

**अस्माच्छरीरतो जीवो निःसृत्येशप्रसादतः ।**
**प्राप्य ज्योतिः परं स्वेन रूपेणास्ते सुखाप्लुतः ।। ५९ ।।**

अस्मात्प्रकृतात् स्थूलसूक्ष्मशरीरद्वयात् समुत्थाय तद्द्वयं विहाय परं ज्योतिर्हरिं प्रसन्नं लोकविशेषरूपविशेषेण स्थितं प्राप्य स्वेन पूर्णानन्दरूपेणाभितोऽशेषेण निष्पन्नो भवतीत्यर्थः ।। ५९ ।।

'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' (छां.उ.८.१२.६) इति श्रुतिमुदाहरति - **स्त्रीभिरिति** ।

**स्त्रीभिः कामगयानैश्च क्रीडंस्तु रमते सदा ।**
**आनन्दोद्रेकतः क्रीडा नाऽप्राप्तसुखलब्धये ।। ६० ।।**

[1]यदि मुक्तानां जीवानां नाप्राप्तसुखलाभोऽपि तु आनन्दोद्रेकतः क्रीडारूपो भवति व्यापारः तर्हि किमु वक्तव्यं भगवतः ।। ६० ।।

**(श्रुतौ भेदपदाभावेऽपि भेदकधर्मकथनात् जीवेशभेदः स्वीकार्यः)**

**मोक्षे भेदकमानानां सत्त्वात् सत्या भिदा चिताम् ।**
**अवस्थानं स्वरूपेण परमा मुक्तिरुच्यते ।। ६१ ।।**

यद्यपि जक्षन्नित्यादिश्रुतिषु भेदवाचकं पदं नास्ति, कथं तत्र भेदसिद्धिः तथापि भेदकान् धर्मान् बोधयतां वाक्यानां सत्त्वात् भेदसिद्धिः । भेदविषयकवद्भेदकविषयकेनापि मानेन भेदसिद्धिरिति भावः ।। ६१ ।।

---

१. क कोशे अयं भागः नास्ति ।

नन्वस्तु लोकविशेषावाप्तिलक्षणावान्तरमुक्तौ भेदः । परममुक्तौ तु नास्तीत्यत आह - **स्वेति** ।

**स्वस्वरूपेण निष्पत्तिर्मुक्तिर्वेदानुवर्त्तिनाम् ।**
**आत्मनाशो हि बौद्धानां नान्या मुक्तिः कथञ्चन ।। ६२ ।।**

'परं ज्योतिरुसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ. ८.३.४) इत्यादिनोक्ता परमैव मुक्तिर्हि यतो वैदिकानामस्वाभाविकाविद्यादिसंसर्गं विहाय निजरूपेणावस्थानं परममोक्षः । आत्मनाशो बौद्धानाम् । निःशेषाविद्यानिवृत्तिपूर्वकस्वरूपाविर्भावातिरिक्ता मुक्तिर्वैदिकानां सम्मता नास्तीत्यर्थः ।। ६२ ।।

**(परापरे द्वे मुक्ती न शास्त्रसम्मते)**

एतदेव स्पष्टयति - **मुक्ती इति** ।

**मुक्ती परापरे न स्तो वैदिकानां मते क्वचित् ।**
**वञ्चयन्ति परं केचित् प्रदर्श्य श्रुतिसाक्षिताम् ।। ६३ ।।**

परापरे द्वे मुक्ती वैदिकानां सम्मते न स्तः । केचिन्मायिनोऽतत्परस्यापि वाक्यस्य तत्परतां प्रदर्श्य मन्दभाग्यान् मनुष्यान् मुक्तिद्वैविध्येन वञ्चयन्ति ।। ६३ ।।

ननु नानातन्त्रविदः श्रुतिव्याख्यातारस्तेपि सन्तीति कथमेवमुच्यते तत्राह - **सुभगेति** ।

**सुभगा भिक्षुकन्यायमाश्रित्य दूषयन्ति हि ।**
**श्रुतिनयं स्वभावं चासुरं प्राप्ता हरिद्विषः ।। ६४ ।।**

यथा गृहागतो भिक्षुको भिक्षा नास्तीति दास्या प्रत्युक्तः परावृत्त्य चलितः । कुतश्चिदागतया गृहस्वामिन्या पुनराकारितः प्रत्याशयाऽऽ-

गतः । केयं दुष्टा दासी परतन्त्रा निवारयित्री? किन्त्वहं गृहस्वामिनी वदामि 'भिक्षा नास्ति' इत्युक्तो भग्नाशो गतस्तथा के बौद्धा वराका वेददूषका इति तान् धिक्कृत्य स्वयं वेदं दूषयति मायीति न्यायार्थः । वेददूषणे हरिद्वेषे त्वासुरस्वभाव एव बीजम् ।। ६४ ।।

**प्रलपन्ति यदीशैक्यं जीवे तद्धि वृथाऽऽग्रहात् ।**
**न स्वभावं विना तत्र किञ्चिन्मानं हि विद्यते ।। ६५ ।।**

यज्जीवेशयोरैक्यं प्रलपन्ति तद् वृथाऽऽग्रहादेव । तत्र दुराग्रहे आसुरस्वभावं विनाऽन्यत्किमपि मानं नास्तीत्यर्थः ।। ६५ ।।

**(सूत्रसङ्घातः न मिथ्याभेदपरः)**

**व्याख्येयः सूत्रसङ्घातोऽद्वैतहन्ता कथं परैः ।**
**यद्युच्येत मृषार्थानि सूत्राणीति गतत्रपैः ।। ६६ ।।**

'नेतरोऽनुपपत्तेः' (ब्र.सू.१.१.१६), 'भेदव्यपदेशाच्च' (ब्र.सू.१.१.१७) 'भेदव्यपदेशाच्चान्यः' (ब्र.सू.१.१.२१) 'विवक्षितगुणोपपत्तेश्च' (ब्र.सू. १.२.२) 'अनुपपत्तेस्तु न शारीरः' (ब्र.सू.१.२.३) 'विशेषणभेदव्यपदेशाभ्यां नेतरौ' (ब्र.सू.१.२.२२) 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (ब्र.सू.१.३.४२) शारीरश्चोभयेऽपि हि भेदेनैनमधीयते (ब्र.सू.१.२.२०) 'पृथगुपदेशात्' (ब्र.सू.२.३.२७) इत्यादि सूत्रसमूहोऽद्वैतदूषको मायावादिभिः कथं व्याख्येयः । यदि त्यक्तलज्जैर्मृषाभूतव्यावहारिकभेदपराणि सूत्राणीत्युच्येत तर्हि व्याख्यातेत्युत्तरेणान्वयः ।। ६६ ।।

**व्याख्याता सौगतः किं न स्याद्वेदस्य यथा परः ।**
**सत्ताभेदोऽस्ति तस्यापि वञ्चका येन मायिनः ।। ६७ ।।**

यदि श्रुत्याद्युक्तो मृषाभूतो व्यावहारिकः, परमार्थतो भेदो नास्तीति श्रुत्यादिकं व्याख्यायेत मायिभिस्तर्हि सौगतो व्यावहारिकभेदादिपरतया

श्रुत्यादिकं व्याख्याय परमार्थतः शून्यमेवेति व्याकुर्वन् वेदव्याख्याता कुतो न स्यात् । बौद्धमतीयं सत्ताद्वैविध्यं हि वक्ष्यते । येन सत्ताभेदेन श्रुतिदूषका अपि मायिनः श्रुतिव्याख्यातृत्वं स्वस्य दर्शयन्तो लोकान् वञ्चयन्तीत्यर्थः ।। ६७ ।।

**(शून्यवादि-मायावादिनोः परापरप्रमेये साम्यसमर्थनम्)**

**असद्वेत्यादिवाक्यानि तत्त्वार्थकानि तस्य हि ।**
**अवेद्यत्वं समं ब्रह्मशून्ययोरुभयोर्मते ।। ६८ ।।**

'असद्वा इदमग्र आसीत्' इति सर्वासत्त्वबोधकवाक्यानि सौगतस्यानुकूलानि स्युः । मानावेद्यत्वादिरूपम् अज्ञानाद्यविरोधि पारिभाषिकस्वप्रकाशत्वादिकं चोभयोर्मते ब्रह्मशून्ययोस्तुल्यम् । सर्वशब्दावाच्यत्वादिकमपि तुल्यम् । यद्यत्प्रमाणस्पृष्टं तन्मृषेत्यपि तुल्यम् ।। ६८ ।।

ननु निरधिष्ठानकभ्रमान्यथानुपपत्त्याऽधिष्ठानतया ब्रह्मणः सत्त्वं भवेत्तत्राह - **चाक्षुषेति** ।

**चाक्षुषादिभ्रमे शुद्धं ब्रह्माधिष्ठानतामियात् ।**
**कथं मायिमते नो चेद् दृश्यताऽतथ्यता भवेत् ।। ६९ ।।**

चक्षुरादिजन्ये शुद्धं निर्विशेषं चक्षुराद्यगम्यं माय्यभिमतं ब्रह्म कथमधिष्ठानतामियात्प्राप्नुयात् । भ्रमाविषयो[1] न भ्रमाधिष्ठानं भवति । नो चेत्तस्य चाक्षुषत्वाधिष्ठानत्वाङ्गीकारे दृश्यता अतथ्यता मिथ्यात्वं च स्यात् । मिथ्याभूतस्य च तन्मतेऽज्ञानाधीनत्वात्सुतरामज्ञानादिकं प्रत्यनधिष्ठानत्वम् ।। ६९ ।।

---

१. रूपत्वमाह - ख.

**संवृत्यावृतशून्यस्य जीवभावं तथागतः ।**
**एकतानेकते तत्र स्वीकरोति हि मायिवत् ।। ७० ।।**

तथागतो बौद्धः शून्यवादी संवृत्याऽविद्यया आवृतस्य शून्यस्य जीवत्वं तत्रापि जीवेषु मतभेदेनैकत्वं बहुत्वं च मायिवत्स्वीकरोति । तस्य परं सौकर्यं वेदप्रामाण्यानभ्युपगमात् । मायिनां वेदप्रामाण्याभिमानवतां न सौकर्यम् । जीवबहुत्वस्वर्गनरकबन्धमोक्षगुरुशिष्यनियम्यनियामकादिव्यवस्थां वदन्तीनां श्रुतीनामप्रामाण्यापत्तेः । व्यावहारिकभेदाय व्यवस्थोपपत्तिस्तु सौगतस्यापि सम्भवतीति सोऽपि वेदव्याख्याता स्यात् ।। ७० ।।

**(सूत्रकृतापि मायावादी निराकृतः)**

भगवता समयपादे ये साङ्ख्यचार्वाककाणादसौगतजैनाद्या निराकृतास्तत्रेश्वरानादर एव निराकरणे बीजम् । तच्च मायिनो मते स्फुटम् । तस्य शून्यवादिनिराकरणेनैव निरासात् पृथङ् न निराकृत इत्याशयेनाह - **समयानिति** ।

**यत् समयान्निराचष्ट समयाङ्घ्रौ दयानिधिः ।**
**बीजं तत्र निरीशत्वं मायिनोऽपि च तत्स्फुटम् ।। ७१ ।।**

समयाङ्घ्रौ समयपादे निराचष्ट निराकृतवान् । तत्र निराकरणे यद्बीजं विश्वस्य निरीश्वरत्वं तच्च ब्रह्मविवर्त्तं विश्वं शुक्तौ रूप्यवदित्यभ्युपगन्तुर्मायिनोऽन्यापेक्षया स्फुटमस्तीत्यर्थः ।। ७१ ।।

ननु समयपादे मायी न निराकृतस्तत्राह - **शून्येति** ।

**शून्यवादिनिराकृत्या मायाव्यपि निराकृतः ।**
**क्षुद्रत्वाच्च पृथङ् नैव तमुट्टङ्कितवान् प्रभुः ।। ७२ ।।**

शून्यवादिनिराकरणेनैव मायावाद्यपि निराकृतः । परोच्छिष्टसङ्ग्राहकत्वात् क्षुद्रोऽतो भिन्नतया नोट्टङ्कितः । न च मायावादस्याधुनिकत्वमेव पृथगदूषणे बीजम् । प्रतिकलियुगं तत्सम्भवात् । कलीनां बहूनामतीतत्वेनानाधुनिकत्वात् । वेदविरुद्धमतान्तराणां न्यूनाधिकभावेन सर्वदा प्रचारः मायावादस्य तु कलावेव ।

'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।
मयैव कथितं देविं कलौ ब्राह्मणरूपिणा ।।

इति पाद्मे देवीं प्रति रुद्रोक्तेः ।। ७२ ।।

**(निरीश्वरसाङ्ख्यमतनिरासः)**

तत्रादौ निरीश्वरसाङ्ख्यान्निराकरोति - **प्रवृत्तिरिति** ।

**प्रवृत्तिर्न स्वतो युक्ता प्रधानस्य जडत्वतः ।**
**स्वीकार्यश्चेतनः कर्त्ता कर्म नाऽतो हि सर्जने ।। ७३ ।।**

जडस्य प्रधानस्य स्वतश्चेतनानधिष्ठितस्य प्रवृत्तिर्न युक्ता, न हि दृष्टा च । अतोऽकामेनापि साङ्ख्येन विश्वसर्जने चेतनः स्वतन्त्रःकर्त्ता स्वीकार्यः । ननु दध्यातञ्चनेन यथा दुग्धं दधित्वं याति, कूलं पतति, तृणादनेन गवां दुग्धं स्रवति, जलं स्यन्दते तथा जडस्यापि प्रधानस्य परिणामः स्यादिति चेन्न । तत्रापीश्वरप्रेरणयैव कार्यसम्भवेन दृष्टान्तासिद्धेः । 'न ऋते त्वत्क्रियते किञ्चन' इति श्रुत्या कार्यमात्रस्येश्वरकर्तृकत्वोक्तेः ।

'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । (भ.गी.१०.४६)

इति स्मृतेश्च ।। ७३ ।।

(चेतनोपसर्जनकप्रकृतिकर्तृत्ववादिसाङ्ख्यैकदेशिमतनिरासः)

नन्वस्तु चेतनोपसर्जनकजडमेव विश्वकर्त्तृ आत्मोपसर्जनदेहस्य पाषाणाहरणादिदर्शनादिति साङ्ख्यैकदेशिनं निराकरोति - **आत्मेति** ।

**आत्मोपसर्जनस्यापि [1]प्रधानस्य न च कर्तृता ।**
**चेतनस्यैव मुख्यं हि लोके दृष्टं प्रवर्त्तनम् ।। ७४ ।।**

पाषाणानयनादावपि चेतनस्यैव प्राधान्यं, देहस्तु सहकारिमात्रम् । योऽहं सुप्तःस्थितः स एवाऽहमिदं करोमीति सुषुप्त्याधारस्य चेतनस्यैव हि लोके प्रवर्त्तनं प्रवृत्तिरनुभवसिद्धा । "अस्माच्छरीरात्समुत्थाय परं ज्योति-रुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाणः" (छां.उ.८.४.३) इति वेदेऽपि देहान्निर्गतस्य चेतनस्यैव प्रवृ-त्त्युक्तेः ।। ७४ ।।

(चेतनस्तु पुष्करपलाशवन्न निर्लेपः)

ननु चेतनोऽकर्त्ता भोक्ता पद्मपत्रवन्निर्लेपश्चेति साङ्ख्याभिमतं मेयान्तरं निराकरोति - **नेति** ।

**न निर्लेपो न चाऽकर्त्ता सर्वदा चेतनो मतः ।**
**विधिनिषेधशास्त्रस्य वैयर्थ्यं स्यात् तदा भृशम् ।। ७५ ।।**

अविद्यायुक्तसांसारिककर्तृत्वाभावेऽपि स्वरूपगतं कृतिमत्त्वादिरूपम-स्त्येव । 'जक्षन्' इत्यादिश्रुतेः । अविद्यायुक्तस्य वास्तवं सांसारिककर्तृ-त्वमप्यस्ति । सुषुप्तिमूर्च्छाप्रलयसमाधिषु स्वरूपगतं कृतिमत्त्वमस्त्येव । अतो यदि जीवस्य कर्मकर्तृभोक्तृत्वादिकं न स्यात्तदा 'यावज्जीवमग्निहोत्रं जुहुयात्' 'ब्राह्मणो न हन्तव्य' इत्यादिविधिनिषेधशास्त्रवैयर्थ्यं स्यात् । न

---

१. प्राणस्य न च । - क.

हि जडं शास्त्रनियोज्यं स्वर्गमोक्षनरकादिफलभोक्तृ चेति युक्तम् । न च दर्पणगतमालिन्यस्य मुख इव बुद्धिस्थस्य कर्तृत्वस्यात्मन्यारोप इति वाच्यम् । यत्र वास्तवकर्तृत्वं तत्रैव भोगापत्तेः । चेतनोऽहं करोमीति चेतनत्वकर्तृत्वयोः सामानाधिकरण्यप्रतीत्या वास्तवचेतनत्वस्य बुद्धिस्थत्वापत्तेः । मोक्षसाधनश्रवणाद्यनुकूलकृतिमत्या बुद्धेरेव मोक्षापत्तेश्च । न च वास्तवो बन्धो मोक्षश्च नास्त्येव । चेतनस्य सदा निर्लिप्तत्वाद् बुद्धेरनित्यायास्तदयोगादिति वाच्यम् ।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।
(आथर्व.उ. २.१.१०)

"तस्य तावदेव चिरं यावन्न विमोक्ष्ये" ।। (बृहदार.उ.)
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् । (गीता.१२.७)
अहं त्वां सर्वपापेभ्यो मोचयिष्यामि मा शुचः ।।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः । (गीता.१८.६६)
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ।
'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' । (ईश.उ.)
ये के चाऽत्महनो जनाः ।।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् । (गीता.१६.२०)

इत्यादि श्रुतिस्मृतीनां मोक्षबन्धप्रतिपादिकानां वैयर्थ्यापत्तेः । तदप्रामाण्यमङ्गीकर्त्ता तु चार्वाकनिरासावसरे निरसिष्यते ।। ७५ ।।

जीवोऽकर्त्तेत्यत्र चाधिकां स्मृतिमुपन्यस्यति - **यदिति** ।

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ।**
**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।। ७६ ।।**

न ह्यत्र जडं सम्बोध्यं मोक्षादिरूपफलभोक्तृ च । न वा बुद्धिगतं कर्तृत्वादिकं जीवे मिथ्याभूतमारोपितमीश्वरस्य प्रत्यक्षं सम्भवति येन तदर्पणादिकमुपदिशेत् । मायामोहं विना मायिकदर्शनासम्भवात् ।।७६।।

**(क्लेशादिविहीन ईश्वरः सर्वकर्ता)**

ईश्वरस्य कर्तृत्वे स्मृतिमाह - **सर्गेति** ।

**सर्गस्थितिविनाशांस्तु भगवान् मधुसूदनः ।**
**तैस्तै रूपैरचिन्त्यात्मा करोत्यव्याहतान् विभुः ।। ७७ ।।**

'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः' 'स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्त्यत्ति गुणत्रयेशः' (भाग.७.) इति स्मृतेः ।। ७७ ।।

नन्वीश्वरस्य कर्तृत्वे क्लेशो विकारित्वं कर्मफलभोक्तृत्वं च स्यात्तत्राह - **क्लशेति** ।

**क्लेशकर्मविपाकैश्च सदा हीनो जनार्दनः ।**
**धर्मिग्राहकमानेन स्वतन्त्रोऽचिन्त्यशक्तिमान् ।। ७८ ।।**

जनार्दनः क्लेशादिनाऽस्पृष्ट एव धर्मिग्राहकमानेन सिद्धः । यथा शिलातले सहस्रधा जलसेकेऽपि नाङ्कुरोद्भवः स्वरूपायोग्यः त्वात् तथेशस्य कर्तृत्वेऽपि न तत्फलभोक्तृत्वमयोग्यत्वात् ।

'न मां कर्माणि लिपन्ति' (भ.गी.४.१४) इत्यादिस्मृतेः ।

तथा चाह श्रीपतञ्जलिः - 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' (योग.सू.) इति । तत्राविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । अनात्मन्यात्मबुद्धिरविद्या । इदं मदीयमित्यभिमानोऽस्मिता । विषयेष्वासक्ती रागः । कोपो द्वेषः । भयमभिनिवेशः । एत एव तन्त्रान्तरे तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति व्यवह्रियन्ते । कर्म

विधिनिषेधौ । आशयो [1]धर्माधर्मौ । विपाकस्तत्फलं सुखदुःखे, तैर्नित्यमस्पृष्टः पुरुष ईश्वर इति सूत्रार्थः । न चेशस्य कर्तृत्वे विकारित्वं स्यात् । कार्यानुकूलज्ञानेच्छाकृतिमत्त्वादिरूपकर्तृत्वस्य विकारानापादकत्वात् । न हि घटादिकं कुर्वति कुलालादौ रूपान्तरापत्तिरूपः कोऽपि विकारो दृश्यते । न चेशस्य परिश्रमापत्तिः । तदीयविश्वकर्तृत्वस्य लीलारूपत्वात् । न हि लीलया कुर्वतः क्वाऽपि परिश्रमो दृष्टो युक्तो वा । अतः प्रकृतिजीवादृष्टादिकं कारकजातं सर्वमीश्वराधीनस्वरूपसत्ताशक्तिकं तदभिमान्यनुग्रहार्थं स्वीकृत्य सृष्ट्यादि करोतीति किमनुपपन्नम् । स्वतन्त्रोऽचिन्त्यानन्तशक्तिस्त्वेक एव हरिरिति सिद्धम् ।। ७८ ।।

**(परमाणव एव द्व्यणुकादिक्रमेण विश्वारम्भका इति वदतोः कणाद-अक्षपादयोर्मतनिराकरणम्)**

ननु परमाणव एव द्व्यणुकादिक्रमेण जगदारभन्ते । जीवादृष्टानीश्वरश्च निमित्तहेतुरिति कणादाक्षपादयोर्मतं स्मृत्या निरस्यति - **प्रकृतिमिति** ।

**प्रकृतिं पुरुषं चाऽपि प्रविश्यात्मेच्छया हरिः ।**
**क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ।। ७९ ।।**

किञ्च परमाणूनां निरवयवानां संयोगासम्भवेन द्व्यणुकाद्युत्पत्त्यसम्भवात्, संयोगस्याऽव्याप्यवृत्तित्वनियमात्, 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानाम्' इत्यादिश्रुत्या

'मयाध्यक्षेण प्रकृतिः सूयते सचाचरम् ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता' ।। (गीता.९.१०)

इत्यादिस्मृत्या चेश्वराधिष्ठितप्रकृतेर्जगत्कारणत्वं यथा बोध्यते, तथा कुत्रा-

---

१. धर्मः । - क.

प्यागमे परमाणूनां हि तन्नोच्यते । एतेन ज्ञानेच्छाप्रयत्नादिभिः कतिपयैः परिमितैर्युक्तः परेशो, नानन्तगुणो न वा ज्ञानानन्दस्वरूपो नित्यसुखरूपो वा । जीवोऽपि न ज्ञानानन्दस्वरूपः । षोडशषु सप्तसु वा पदार्थेषु विभिन्नतया मुमुक्षुज्ञेयेषु मध्यनिविष्टः परेशस्तद्वदेवेतरभिन्नतया ज्ञेयो न तु सर्वनियन्तृत्वाद्यनन्तगुणवत्त्वेनेति निरस्तम् ।

'यो वा अनन्तस्य गुणाननन्ताननु क्रमिष्यन् स तु बालबुद्धिः ।
(भाग.पु. ११.५.२)

इत्यादिस्मृतेः "विज्ञानमानन्दं ब्रह्म" (३.९.२८) आनन्दं ब्रह्मणो विद्वान्" (तैत्त.२.९) इत्यादिश्रुतेः "तमेवं विद्वानमृत इह भवति" (तै.आ. ३.१२) इत्यादिसावधारणश्रुत्येशज्ञानस्यैवमोचकत्वोक्तेश्च ।

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ।
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।
(भ.गी.१०.८, ५.२९)

इत्यादिस्मृतिभिरैश्वरज्ञानस्यैव मोचकत्वोक्तेश्च । जीवस्य ज्ञानानन्दरूपत्वं सौषुप्तिकानुभवेन हि सिद्धम् । न हि सुषुप्तौ जन्यं ज्ञानं सुखं चास्ति । न वा सुप्तोत्थितस्य सुखमस्वाप्समिति सुखपरामर्शः सुषुप्तौ सुखानुभवं विनोपपद्यते । अतोऽन्यसाधारणतया ज्ञेयं परिमितगुणमजागलस्तनतुल्य-मीश्वरमङ्गीकुर्वन्तोऽर्थतस्तमनाद्रियमाणा निरीश्वरा एव काणादादय उपेक्ष्याः । योगिनः चित्तैकाग्र्यार्थमङ्गीकुर्वन्तोऽर्थतो निरीश्वरा एव । न च भगवता समयपादे जैमिनीया [1]न कुतो निराकृताः । तेषामन्तःकरण-

---

१. ख कोशे नास्ति ।

शुद्ध्यर्थं कर्ममात्रनिरूपणं कुर्वतामीश्वरेऽनादराभावात् । न हि कुत्रापि तैरीश्वरो निराकृतः । मीमांसका निरीश्वरा इत्याधुनिकप्रवादस्तु भ्रान्तिमूलक एव । तदीयसूत्रेषु तथोक्तेरभावात् । न च तेषामीश्वरादरे मानाभावः । भगवताऽनिराकरणेन तदनुमेयत्वात् ।। ७९ ।।

**(शैवशाक्तादिमार्गोऽपि मुमुक्षुभिः त्याज्यः)**

शैवशाक्तादिमार्गोऽपि मुमुक्षोर्निषिद्ध इत्यर्थकभारतमुदाहरति - **नान्यदेवमिति** ।

**नान्यदेवं नमस्कुर्यान्नान्यदेवं निरीक्षयेत् ।**
**चक्राङ्कितः सदा तिष्ठेन्मद्भक्तः पाण्डुनन्दन ।। ८० ।।**

स्वातन्त्र्येणैवान्यदेवनमस्कारादिकं निषिद्धं हरिपरिवारत्वेन तु देवान्तरं नमस्कार्यमेव ।

'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' । (भ.गी.७.१४)

इति सावधारणस्मृत्या देवान्तरप्रपत्तेर्निरासात् ।।

यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ।। (भ.गी.७.२१)
लभते च ततः कामान् मयैव विहितान् हि तान् ।
अन्तवत्तु फलं तेषां तद् भवत्यल्पमेधसाम् ।। (भ.गी.७.२२)

इति देवान्तरोपासनजन्यफलस्य नश्वरत्वं, तेषां चाल्पमेधस्त्वोक्त्या देवान्तरस्य मुमुक्ष्वनुपास्यत्वं स्पष्टम् ।। ८० ।।

तेषामल्पमेधस्त्वं स्मृत्यन्तरेण स्फुटयति - **वासुदेवमिति** ।

**वासुदेवं परित्यज्य योऽन्यदेवमुपासते ।**
**तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ।। ८१ ।।**

यथा तृषितस्य गङ्गातीरे कूपखननमनुचितं तथा मुमुक्षोर्हरिं विहायान्यदेवभजनमनुचितमिति भावः ।। ८१ ।।

मोक्षधर्मवाक्यमुदाहरति - **ब्रह्माणमिति** ।

**ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।**
**प्रतिबुद्धा न सेवन्ते मामेवैष्यन्ति यत्परम् ।। ८२ ।।**

यद्यस्मात्प्रतिबुद्धा ब्रह्मापरोक्षज्ञानिनो मामेवैष्यन्ति मुक्तौ प्राप्नुवन्त्यतस्ते ब्रह्मादीन्न सेवन्ते न सेवेरन् । सेवायास्तज्जन्यज्ञानस्य तज्जन्यप्राप्तेश्च समानविषयकत्वात्

'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि । (भ.गी.७.२३)
इति स्मृतेश्च ।। ८२ ।।

**(चार्वाकसमयनिरासः)**

ये साक्षादर्थतो वा निरीश्वरवादिनो वैदिकंमन्यास्ते निरस्ताः । पाषण्डिषु निरसनीयेष्वतिदुष्टं चार्वाकमादौ महामल्लभङ्गन्यायेन निरस्यति - **अदृष्टमिति** ।

**अदृष्टं निह्नुवानो यो देहात्मत्वं समाश्रितः ।**
**सर्वव्यवस्थितेः स्याद्धि विच्छेदो हेत्वभावतः ।। ८३ ।।**

अदृष्टं धर्माधर्मादिकं निह्नुवानोऽपलपन् देहस्यैवात्मत्वमङ्गीकुर्वन् यो लोकान् प्रतारयति तस्य मते सुखदुःखादियुक्तविविधविचित्रप्राणिसृष्टिव्यवस्थोच्छेदः स्यादित्यर्थः । देहस्य परिणामिनः कालभेदेन भिन्नत्वाद्योऽहं बाल्ये पितॄनन्वभवं स एवाहं वार्द्धक्ये पितॄननुभवामीति प्रत्यभिज्ञा योऽहं स्वप्नव्याघ्रदेहः स एवाहमिदानीं मनुष्यदेह इत्यननुगतदेहेष्वनुगतानुभवश्च विरुद्धयेत । ननु स्वभावादेव विविधविषमसृष्ट्युपपत्तिरिति चेन्न ।

स्वभावो ह्यदृष्टं दृष्टं वा? आद्ये सिद्धं नः समीहितम् । पुण्यपापेश्वरान्यतमेनैवादृष्टेन वैचित्र्योपपत्त्या त्वन्मतभङ्गोपपत्तेः । द्वितीये तत्तद्वस्तुस्वरूपं ततो भिन्नं न वा । नाद्यः । निर्निमित्तककार्योत्पत्त्यापत्तेरनुद्धारात् । न द्वितीयः । दृष्टस्य नियामकान्तराकाङ्क्षाया आवश्यकत्वात् । एकस्मादेव दृष्टवस्तुनो मात्रादेर्नृपभिक्षुकयोरुत्पत्तिदर्शनाच्च । न च कार्यगतस्वभावो नियामकः, आत्माश्रयापत्तेः ।। ८३ ।।

नन्वर्थकामावेव पुरुषार्थौ, परलोकादिकं नाऽस्त्येवेति निःशङ्कं विषयं भुञ्जानः पुमानतिरतिमान् भवेत् । न हि धर्माधर्मतो भीतस्य पुंसः कामो रतिकरो भवत्यतो लोकान् सुखं प्रापयन्नेतादृशमार्गोपदेष्टाऽत्यन्ताप्तो भवतीत्यत आह - **हन्युरिति** ।

**हन्युः शिष्या गुरुं कामात्तद्भार्याग्रहणेच्छया ।**
**निर्मर्यादं जगन्नश्येत्कामार्थैकपरैर्नृपैः ।। ८४ ।।**

यदि पुण्यपापस्वर्गनरकादिकं नास्ति तदा शिष्याः कामातुराः सन्तो निःशङ्कं गुरुं हन्युस्तं हत्वा च तद्भार्यां गृह्णीयुर्नृपैर्बलवद्भिर्निर्मर्यादं निःशङ्कं परधनदारादिकमपहरद्भिर्जगन्नश्येत् । खगमृगवानरादीनामिव परस्परभयसंत्रस्तानां पुंसां सुखलेशोऽपि न स्यात् ।। ८४ ।।

ननु शब्देन नरकादिदुःखं श्रुत्वा लोका अतिभीता भवन्तीति लोकसुखाय प्रत्यक्षान्यस्य शब्दादेः प्रमाणत्वं नाङ्गीकार्यं तत्राह - **प्रत्यक्षमेवेति** ।

**प्रत्यक्षमेव यद्येकं प्रमाणं नापरं तव ।**
**प्रवर्तेत कथं धूमं दृष्ट्वाऽग्न्यर्थी हि पर्वते ।। ८५ ।।**

अपरमनुमानादिकं यदि तव मते प्रमाणं न स्यात् धूमं दृष्ट्वाऽग्न्यर्थी पुमान् पर्वतादौ कथं प्रवर्त्तेत । न च सम्भावनयैव प्रवृत्तिः । उत्कटको-

टिकसंशयरूपायाः सम्भावनाया बह्वायाससाध्यनिष्कम्पप्रवृत्तिजनकत्वासम्भवात् । सम्भावनायास्तादृशप्रवृत्त्यादिजनकत्वे प्रमाणत्वापत्तेश्च । शिष्यसंशयविपर्ययादेर्गुरोरप्रत्यक्षत्वेनोपदेशानुपपत्तेश्च । किञ्चाप्रत्यक्षेऽप्रामाण्यमबोधकत्वं, तदभाववति तद्बोधकत्वं वा? आद्ये शिष्यबोधनाय तव शब्दप्रयोगानुपपत्तिः । द्वितीये नाप्रत्यक्षं प्रमाणमिति त्वदीयवाक्यस्याऽप्रामाण्यमावश्यकम् । तच्च प्रामाण्यवत्यप्रामाण्यप्रकारकत्वादिरूपमनुमानादेः प्रामाण्ये सत्येवोपपद्यते । त्वदीयवाक्यस्याऽप्रामाण्यवत्यप्रमाण्यप्रकारकत्वरूपप्रामाण्ये हीदं वाक्यमेव प्रत्यक्षभिन्नं प्रमाणमित्युभयथा प्रत्यक्षभिन्नस्याप्रामाण्यं व्याहतम् । किञ्चातीन्द्रियसंस्कारानङ्गीकारे बाल्यानुभूतस्य वस्तुनो वार्द्धक्ये स्मरणानुपपत्तिः । तदङ्गीकारे परिणामभेदभिन्नदेहातिरिक्तः संस्काराश्रयतयाऽऽत्मा सिद्ध्येदेव ।। ८५ ।।

**(देहसमानमान आत्मेति जैननयनिरासः)**

नन्वस्तु देहभिन्नस्तत्तुल्यपरिमाण इति जैनमतं निरस्यति - **देहेति** ।

**देहमानमितस्य स्यान्न्यूनाधिकतया स्थितिः ।**
**मानभेदाद्विकारित्वं देहात्मत्वं समापतेत् ।। ८६ ।।**

देहपरिमाणतुल्यश्चेदात्मा तर्हि पिपीलिकादेहस्थितस्य हस्तिदेहं प्राप्तस्य न्यूनतया हस्तिदेहस्थस्य पिपीलिकादेहं प्राप्तावाधिक्येन चावस्थानं स्यात् । ननु यं देहं प्राप्नोति तत्परिमाणको भवतीति चेत् परिमाणभेदेन विकारित्वं स्यात् । तथा च देहात्मत्वमतमेव पर्यवसन्नं स्पष्टम् । मनुष्यमत्स्यहस्तिसर्पवृक्षादिदेहानां परिमाणाधीनत्वेन मोक्षेऽपि देहावस्थितिः स्यात् । आत्मा वा परिमाणहीनः स्यात् । न हि भौतिको देहो मोक्षे भवति संसाराविशेषापत्तेः । न वा परिमाणहीनस्यात्मरूपद्रव्यस्य स्थितिर्युक्ता ।। ८६ ।।

(सप्तभङ्गिवादनिरासः)

द्विविधं विश्वं जीवाजीवात्मकं निरीश्वरम् । तच्च षड्द्रव्यात्मकम् । जीवधर्माधर्मपुद्गलकालाकाशानि द्रव्याणि । तत्र जीवास्त्रिविधाः बद्धा योगसिद्धा मुक्ताश्चेति । धर्मो [1]गतिहेतुर्जगद्व्याप्यम् । अधर्मः स्थितिहेतुर्व्यापक एव । पुद्गलो रूपरसगन्धस्पर्शवद् द्रव्यम् । तत् द्विविधं परमाणुरूपं सङ्घातरूपं च । कालो भूतभविष्यदिति व्यवहारहेतुरणुरूपः । आकाश एकोऽनन्तप्रदेशश्च । स द्विविधो लोकाकाशोऽलोकाकाशश्चेति । अत्र मोक्षोपयोगिनः सप्तपदार्थाः जीवाजीवास्त्रवबन्धनिर्जरसंवरमोक्षाः । जीवो ज्ञानदर्शनसुखवीर्यगुणः । अजीवो भोग्यवस्तु । आस्त्रवं सद्भोगोपकरणमिन्द्रियादिकम् । निर्जरो मोक्षसाधनं तपः । संवर इन्द्रियनिरोधः । मोक्षः स्वाभाविकात्मस्वरूपाविर्भावः । सम्यग्ज्ञानसम्यग्दर्शनसम्यक्चरित्राख्यरत्नत्रयात्मको मोक्षहेतुरिति । एतद्विश्वं सप्तभङ्गि । सदित्येकः प्रकारः । असदिति द्वितीयः । सदसदात्मकस्तृतीयः । सदसद्विलक्षणश्चतुर्थः । सत्त्वे सति तद्विलक्षणमिति पञ्चमः । असत्त्वे सति तद्विलक्षणमिति षष्ठः । सदसदात्मकं सदसद्विलक्षणं चेति सप्तमः । एवं भिन्नत्वनित्यत्वादिषु सप्त प्रकारा ऊह्याः । अतः कार्यकारणनियमासम्भवादिति विश्वहेतुतया नेश्वरसिद्धिरिति जैना वदन्ति । तत्र जीवाजीवात्मकत्वादिप्रक्रियायाः काकदन्तपरीक्षातुल्यताप्रदर्शनाय वर्णनम् । सप्तभङ्ग्येव सेश्वरमतविरोधीति तन्निराकरोति - **तिष्ठेयुरिति** ।

**तिष्ठेयुः कथमेकत्र प्रकारा एकदैव हि ।**
**विरुद्धा न कुतस्ते स्युर्नियामकस्य वर्जनात् ।। ८७ ।।**

एकस्मिन्नेककालावच्छेदेन परस्परं विरुद्धाः प्रकाराः कथं तिष्ठेयुः ।

१. गतिर्ज । - क.

अन्यथा सप्तैव कुतः सप्तप्रकारवत्त्वे सति तद्भिन्नमित्याद्या अन्येऽपि प्रकाराः कुतो न स्युः । सप्तैव प्रकारा इत्यत्र मानाभावात् । वस्तूनामेकैकाकारनियमदर्शनेन सप्तप्रकारबाधाच्च । न चैकैकप्रकारदर्शनं भ्रमः । बाधाभावात् । न च विश्वसत्त्वाङ्गीकारेऽसद्वाद्युक्तदोषोऽसत्त्वाङ्गीकारे सद्वाद्युक्तदोष इत्यनियम इति वाच्यम् । तव सदसदात्मकत्वाद्यङ्गीकारे सद्वाद्यसद्वाद्युक्तदोषाणां समुच्चितानामापत्तेः ।

किञ्च यदि प्रमाणविरुद्धमपि सप्तप्रकारत्वं स्वीक्रियते तदा भूतमात्रहिंसाया धर्मत्वमहिंसाया अधर्मत्वं शशस्य शृङ्गित्वं गोरशृङ्गित्वं मातुर्वन्ध्यात्वं भगिनीपुत्र्यादेश्च भार्यात्वं गोमांसभक्षणादेर्धर्मत्वं तद्वर्जनादेरधर्मत्वं जिनाभ्युपगतस्याऽप्रामाण्यं वेदस्य प्रामाण्यं मुक्तस्यापि बद्धत्वं बद्धस्यापि मुक्तत्वं सिद्धस्यापि रागित्वं रागिणोऽपि सिद्धत्वमित्यादिकमपि प्रमाणविरुद्धं कुतो नाङ्गीक्रियते ।

किञ्च क्षुधितस्यान्नभोजने तृषार्त्तस्य जलपाने नियमेन प्रवृत्तिर्न स्यात्। क्षुन्निवर्त्तकतावच्छेदकतृप्तिजनकतावच्छेदकादेरेकान्तधर्मस्यानङ्गीकारादत्युपेक्ष्यो प्रामाणिकविरुद्धभाषी जैनः । तथा[1] औपनिषदं ब्रह्म सर्वशब्दावाच्यम् । विश्वं सदसद्भिन्नमित्यादिकं व्याहतं वदन् माय्यप्युपेक्ष्यः ।।८७।।

**(वैभाषिकसौत्रान्तिकमतनिरासः)**

ननु परमाणुपुञ्जात्मकं घटपटादि विश्वम् । कालतः क्षणिकम् । देशतः परमाणुस्वरूपं वस्तुतत्त्वम् । न च स्थूलं वस्त्वस्ति । संस्काररूपविज्ञानसंज्ञादुःखानीति पञ्च स्कन्धाः । तदात्मकं विश्वं सन्तानतो नित्यम् । समनन्तरप्रत्ययः संस्कारस्कन्धः । रूपरसगन्धस्पर्शात्मकाः

---

१. जगति सदसद्भेदः । - क.

परमाणवो रूपस्कन्धाः निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः । सविकल्पकं ज्ञानं संज्ञास्कन्धः । वेदनापरपर्यायो दुःखस्कन्धः । दुःखाभाव एव सुखम् । सामान्याभाव एवाकाशः । रूपादय एव पृथिव्याद्याः । सङ्ख्याद्या गुणा न सन्त्येव पृथगनुपलम्भात् । देशान्तरोत्पाद एव कर्म । क्षणिकस्य वास्तवकर्मायोगात् । सन्निकृष्टोत्पत्तिरेव संयोगव्यवहार-गोचरः । अतद्व्यावृत्तिरेवानुगतगोत्वादिः । सन्तन्यमानं ज्ञानमेवात्मा । तस्य विषयोपप्लवः संसारः । निर्विषयतयाऽवस्थानं मोक्षः । कालादिकं निमित्तम् । अतीन्द्रियपरमाणुभ्यः सेन्द्रियः समुदायो घटादिर्जायते । किं तत्रेश्वरेणेति वैभाषिकसौत्रान्तिकयोर्मतं तत्रावान्तरभेदमुपेक्ष्य दूषयति - **स इति।**

**स एवायं घटो ह्येकः स्थूलोऽयं दृष्टवानहम् ।**
**इति शोधितमानेन सुगतस्य मतं हतम् ।। ८८ ।।**

स एवायमिति प्रत्यभिज्ञया क्षणिकत्वनिरासः । एकः स्थूल इत्यनेन परमाणुसमुदायो घटादिरिति निरासः । शोधितेन परीक्षितेन मानेन प्रत्य-क्षेण । प्रमाणापलापे तु त्वदीया प्रक्रियापि न सिद्ध्येत् ।

किञ्च समुदायो ह्येकहेतुकोऽनेकहेतुको वा । नाद्यः । एकस्य समुदा-यहेतुतायाः क्वाप्यदर्शनात् । असम्भवाच्च । द्वितीये विरलानामारम्भकत्वे समुदायस्य सदातनत्वापत्तेः । सार्वत्रिकत्वापत्तेश्च । आरम्भकाणां विर-लाणूनां सदा सर्वत्र सत्त्वात् । मिलितानां तु नारम्भकत्वम् । क्षणिकाना-मणूनामेकक्षणोत्पन्नानां द्वितीयक्षणेन मेलनासम्भवात् । पार्थिवाणुभ्यः पार्थिवः समुदाय इति नियमो नोपपद्यते । निरन्वयोत्पादविनाशाङ्गीकर्तृ-मते इदमस्य कारणमिदं नेत्यसम्भवात् । न हि कपालादौ घटादेरिव परमाणुसमुदायस्य पूर्वस्थितपरमाणुषूत्पादविनाशौ क्षणिकमते स्तः ।

किञ्च क्षणिकत्वं क्षणसम्बन्धश्चेदिष्टापत्तिः । स्थायिनोऽपि क्षणसम्बन्धसत्वात् । क्षणमात्र एवोत्पादनाशवत्त्वं तु घटपटादिवस्तुनः प्रमाणबाधितम् । क्षणान्तरासम्बन्धित्वं च प्रत्यभिज्ञया बाधितम् । न च प्रत्यभिज्ञा भ्रान्तिः । बाधाभावात् । विश्वस्य दृष्टिसृष्टिं स्वीकुर्वाणोऽर्थतः क्षणिकत्वमङ्गीकुर्वाणो माय्यपि निरस्तः । सुखस्य न दुःखाभावरूपत्वम् । दुःखाभावस्य सुखहीने घटादावपि सत्त्वात् । विनिगमनाभावेन [1]दुःखस्य सुखाभावरूपतापत्तेः । आकाशस्य निष्प्रतियोगिकतयोपलम्भादभावरूपत्वासम्भवात् । गुणानां रूपादीनां पृथिव्यादिभ्यो भेदस्य सर्वानुभवसिद्धत्वात् । अगवादेरनुपस्थितावपि गोत्वादेर्दर्शनाद्भावरूपमनुगतं गोत्वादिकम् । न हीतरोपस्थितिं विनेतरव्यावृत्तिधीः सम्भवति । यस्तु सौत्रान्तिकोऽनुमेयमेव घटादिकं न प्रत्यक्षमिति स तु प्रत्यक्षेण जानामीति प्रतीत्यैव निरस्तः ।। ८८ ।।

**(सर्वं ज्ञेयं ज्ञानाकारमिति वदतां योगाचाराणां दूषणम्)**

ननु स्यादीश्वरो जगत्कर्त्ता यदि ज्ञानभिन्नं जगत्स्यात् । तदेव नास्ति । घटपटादीनां ज्ञानाकारत्वादिति योगाचारमतं दृष्टिसृष्टिं स्वीकुर्वता मायावादिनापि स्वीकृतं निरस्यति - **घटस्येति** ।

**घटस्य धीर्घटो नो धीरिति भेदमतिः स्फुटा ।**
**नास्ति ज्ञानं घटो हीत्यभेदधीः कस्यचित् क्वचित् ।। ८९ ।।**

घटस्य ज्ञानं घटो न ज्ञानमिति ज्ञानघटयोर्भेदधीः स्फुटा । घटो ज्ञानमित्यभेदधीस्तु कस्यचित्क्वचिदपि नाऽस्ति । न च ज्ञानभिन्नस्य घटादेः कथं प्रकाशः । ज्ञानभिन्नस्यापि ज्ञाने प्रकाशे ह्येकस्मिन् सर्वस्य प्रकाशा-

---

१. सुखस्य दुःखाभाव । - क.

पत्तिरिति वाच्यम् । ज्ञानभिन्नेषु घटादिषु यत्र विषयताख्यसम्बन्धस्तस्यैव नान्यस्येति व्यवस्थोपपत्तेः । नीलपीतादिविषयकसमूहालम्बनस्य विरुद्ध-नानानीलाद्याकारासम्भवाच्च ।। ८९ ।।

(शून्यविवर्तोऽयं प्रपञ्च इति वदतां शून्यवादिनां मतनिरासः)

ननु शून्यमेवाविद्यापरपर्यायसंवृत्यवच्छिन्नं विविधविचित्रजगदाकारेण विवर्त्तते । शून्यमेव मनोवचनागोचरोऽद्वितीयं परमं तत्त्वम् । पारमार्थि-कसत्त्वाभावेऽपि व्यावहारिकापरपर्यायसांवृतसत्त्वेनैव जगति सद्बुद्धिरर्थ-क्रियाहानोपादानादयश्च भवन्ति । तच्च निर्लेपं निर्विशेषं शून्यमस्तीति भावनापरिपाके शून्यापत्तिरिति मायिनाऽप्यङ्गीकृतं माध्यमिकमतं निर-स्यति - **शून्यमिति** ।

**शून्यं केन प्रमाणेन सिद्धं ते निर्विशेषकम् ।**
**स्वतः सिद्धौ खपुष्पादेः सिद्धिः केन निवार्यताम् ।। ९० ।।**

त्वदभिमतं शून्यं केन प्रमाणेन सिद्धम् । न तावत्प्रत्यक्षेण । तेन वस्तूनां सत्यत्वेनैव ग्रहणात् । नानुमानेन । तस्य सविकल्पकज्ञानजन-कत्वनियमेन निर्विकल्पकधीजनकत्वासम्भवात् । सविकल्पकधियस्तु त्वदभिमतनिर्विशेषशून्यविरोध्यर्थावगाहित्वनियमात् । ननु स्वत एव सिद्धं तदिति चेत् किं प्रमाणं विनैव सिद्धम् । स्वविषयकत्वेन वा । आद्ये खपुष्पशशशृङ्गादीनामपि सिद्ध्यापत्त्याऽद्वैतशून्यमतहानिः । द्वितीये विषयित्वविषयत्वादिना सविशेषापत्तिः ।

किञ्च यद्यसतः शून्यात्परमार्थसदितिकृतनामकात् कार्योत्पत्तिः स्यात् तदा मधुरादिव सप्तमरसाञ्जनस्य पीनता स्यात् । गोः शृङ्गमिव शशशृङ्ग-मपि जनस्य घातकं स्यात् ।

किञ्च देशकालवयोऽवस्थानियमः कार्योत्पत्तावस्ति न वा । आद्ये

देशकालादिनियमस्य सत्त्वघटितत्वे सत एव हेतुत्वसिद्धिः । द्वितीये कृष्णभूमावेव गोधूमा भवन्ति नोषरभूमौ, वसन्ते किंशुकाः पुष्पिताः न वर्षासु, त्रिहायन्येव गौर्गर्भं धत्ते न त्वन्या, सतुषा एव व्रीहयोऽङ्कुरान् जनयन्ति नाऽन्यथेति नियमोऽनुभवसिद्धो विरुद्ध्येत शून्यस्य सर्वत्राऽविशिष्टत्वात् । ननु यदि कार्यस्य तदुत्पत्तेश्च सत्त्वं स्यात्तदा सप्तमरसादितः कार्यापादनं सम्भवेत् । मन्मते सप्तमरसतत्कार्ययोः षड्रसतत्कार्याणामप्यसत्त्वेन तद्दृष्टान्तेनापादनासम्भवादिति चेन्न । पुष्टिकामस्य त्वादृशस्य सप्तमरस इव षड्रसेष्वपि प्रवृत्त्यनुपपत्तेः । किञ्च जागरस्वाप्नयोः शुक्तिरूप्याद्योश्च मिथ्यात्वाविशेषे जागरज्ञानेन स्वाप्नबाधः शुक्त्यादिज्ञानेन रूप्यादिबाध इति व्यवस्थानुपपत्तिः स्यात् ।। ९० ।।

**('परेऽव्यये' इति श्रुतिः नैक्यपरा)**

ननु मास्तु सौगतरीत्या जगतो मिथ्यात्वं निर्विशेषशून्यादिसिद्धिश्च । किन्तु मायिरीत्या जीवेशाभेदश्रुत्यन्यथानुपपत्त्या विश्वस्य मिथ्यात्वं सिद्ध्यतीत्याशङ्कामपाकर्त्तुं 'परेऽव्यये सर्व एकीभवन्ति' इत्यादि श्रुतिं व्याख्याति - **एकीभवन्तीति** ।

**एकीभवन्ति सर्वे हि परेऽव्यये नृपा यथा ।**
**एकीभूयाऽर्जुनं शत्रुं शरैर्ववृषुराहवे ।। ९१ ।।**

यथा नृपा विरुद्धमतिहानेनैकमत्येनैकीभवन्तीति व्यवह्रियते तथा मुक्ता एकमत्या तथा व्यवह्रियन्त इत्यर्थः ।। ९१ ।।

**एकीभवन्ति गावो हि गोष्ठे सायं यथा सदा ।**
[1]**कीटभृङ्गयोरैक्यं तथेशजीवयोर्मतम् ।। ९२ ।।**

यथा गवां स्थानैक्यव्यपदेशस्तथेशजीवयोः । यथा च कीटस्य भृङ्ग-

१. यथैव कीटभृङ्गैक्यं तथा जीवेशयोर्मतम् इति पाठः साधुरिति भाति ।

भावस्तथा जीवस्याऽपि पूर्णत्वरूपो ब्रह्मभावः । प्रागविद्यावृतो ब्रह्मापरोक्ष्येणाविद्यानिवृत्तावाविर्भवतीत्यर्थः ।। ९२ ।।

तदेव स्पष्टयति - **सम्मत्येति** ।

**सम्मत्या देशतो लोके सादृश्येनापि चैकता ।**
**अन्यथा सप्तमी व्यर्था च्विप्रत्ययो निरर्थकः ।। ९३ ।।**

जीवेशयोरभेदे आधारतादिबोधिका सप्तमी व्यर्था । अभूतभवनार्थकच्विप्रत्ययोऽपि व्यर्थः । न हि तन्मते ब्रह्मभिन्नः प्रागसन् जीवब्रह्माभेदो ज्ञानेन जायते ।। ९३ ।।

**(अहं ब्रह्मास्मि इति श्रुत्यर्थकथनम्)**

'तदात्मानमेवावेदहं ब्रह्मास्मीति' (बृ.उ.३.५.४) इति श्रुतिं व्याख्याति - **आविरिति** ।

**आविर्भूतप्रभं जीवं नैश्वरैक्यं कथञ्चन ।**
**ब्रह्मास्मीति श्रुतिर्ब्रूते परेशानुग्रहात् स्फुटम् ।। ९४ ।।**

शुद्धस्वरूपं जीवं आविर्भूता प्रभा पूर्णानन्दादिरूपः प्रभावो यस्य तम् । न तु जीवस्येशेनैक्यम् । "यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" इति भेदवाक्यविरोधः स्यात् ।। ९४ ।।

**(ब्रह्मविद् ब्रह्मैव भवति इति श्रुत्यर्थकथनम्)**

'ब्रह्मविद् ब्रह्मैव भवति' (मुं.उ.४.९) इति श्रुतिं सङ्गृह्णाति - **ब्रह्मेति**।

**ब्रह्मैव भवति ब्रह्मविदित्याद्या वदन्ति हि ।**
**जीवस्य ब्रह्मतां सत्यां पूर्णसद्गुणलक्षणाम् ।। ९५ ।।**

गुणपूर्त्तिरेव ब्रह्मशब्दार्थः ।। ९५ ।।

एतदेव स्पष्टयति - **बृहत्वमिति** ।

**बृहत्त्वं ब्रह्मशब्दार्थो जीवस्यास्ति स्वयोग्यतः**
**द्वे ब्रह्मणी हि वेद्ये स्त इति जीवे प्रयोगतः ।। ९६ ।।**

स्वयोग्यतानुसारेण गुणपूर्त्तिलक्षणो ब्रह्मशब्दार्थो जीवस्यास्ति । 'द्वे ब्रह्मणी वेदितव्ये' इति प्रयोगो जीवेऽप्यस्ति ।। ९६ ।।

**('यथा नद्यः' इति श्रुत्याशयप्रकाशनम्)**

'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तङ्गच्छन्ति नामरूपेऽविहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (आथर्वण, ४.१.८) इति श्रुतिं सङ्गृह्णाति - **स्यन्दमाना इति** ।

**स्यन्दमाना यथा नद्यः समुद्रे प्रविशन्ति हि ।**
**तथा जीवाः प्रविष्टाः स्युर्विमुक्तौ जगदीश्वरे ।। ९७ ।।**

समुद्रे प्रविष्टनद्युदकस्य पृथगवस्थितिः स्फुटा ।। ९७ ।।

**प्राकृतं नामरूपादि हित्वोपैति परात्परम् ।**
**दिव्यं वै पुरुषं विष्णुं तत्प्रसादोनबन्धनः ।। ९८ ।।**

आविर्भूतपूर्णानन्दः सन् प्राकृतनामादिकं हित्वा पुरुषं सर्वान्तर्यामिणं विष्णुमुपैति । तस्य विष्णोः प्रसादेनोनं नष्टमविद्याख्यं बन्धनं यस्य सः ।। ९८ ।।

तिलेषु निक्षिप्ततिलानां पृथगनुपलब्धावपि न स्वरूपैक्यमित्याह - **जलानामिति** ।

**जलानामेकता नास्ति संश्लिष्टानां परस्परम् ।**
**निक्षिप्तानां तिलादीनां राशौ न ह्येकता क्वचित् ।। ९९ ।।**

यथा तिलराशौ निक्षिप्तानां देवदत्ततिलानां पृथगनुपलब्धावपि न स्वरूपैक्यं तथा नदीनां न समुद्रजलैक्यम् ।। ९९ ।।

जलानामैक्ये बाधकमाह - **परिमाणेति** ।

**परिमाणविवृद्धिर्न स्यात्तथा क्षीरनीरयोः ।**
**यत्नाद्विवेचनं न स्यादेकतां गतयोः क्वचित् ।। १०० ।।**

क्वचिन्मिलितयोः क्षीरनीरयोर्विवेचनं न स्यात् ।। १०० ।।

**('तत्त्वमसि' इत्यत्र पदैकदेशविभक्तिमात्रलक्षणा लघीयसी)**

ननु तत्त्वमस्यादिवाक्यबोधितो जीवेशाभेदः कथमपलप्यत इति चेन्न। सर्वज्ञत्वादिविरुद्धधर्मवतोर्दहनतुहिनवदभेदासम्भवात् । न च सर्वज्ञत्वादिधर्मं विहायोभयानुगतचिन्मात्रे पदद्वये लक्षणेति वाच्यम् । पदद्वयलक्षणापेक्षया पदैकदेशविभक्तिमात्रलक्षणाया लघीयस्त्वादित्याह - **तत्त्वमस्यादीति** ।

**तत्त्वमस्यादिवाक्येषु युक्ता पदैकदेशतः ।**
**त्वदीयसर्ववाक्यीयलक्षणाऽपेक्षया चिति ।। १०१ ।।**

त्वदीया समस्ते वाक्ये विभक्तिविशिष्टप्रातिपदिके वा तामपेक्ष्यास्मदीयविभक्तिमात्रलक्षणा लघीयसी। तथा च तेन त्वं तस्मात्त्वं तस्य त्वं तस्मिंस्त्वमित्यर्थः । न च सुब्विभक्तौ न लक्षणा । प्रयाजशेषेण हवींष्यभिघारयेदित्यत्र प्रयाजशेषं हविःष्वभिधारयेदित्यादौ सुब्विभक्तिलक्षणायाः स्वीकृतत्वेनोक्तप्रवादस्याप्रामाणिकत्वात् ।। १०१।।

लक्षणापि तदीया व्यर्थेत्याह - **चित इति** ।

**चितोऽवान्तरवाक्येन सत्यज्ञानादिकेन ते ।**
**ज्ञातत्वाल्लक्षणा व्यर्थाऽज्ञातार्थस्य विवर्जनात् ।। १०२ ।।**

'सत्यं ज्ञानमनन्तं ब्रह्म' (तैत्त.२.१) 'योऽयं विज्ञानघन' (सुबालोपनिषत्, १५.२) इत्याद्यैरवान्तरवाक्यतया त्वयाऽङ्गीकृतैर्लक्षणयाऽखण्डचि-

न्मात्रब्रह्मस्वरूपस्य ज्ञातत्वादज्ञातार्थाभावात्तत्त्वमस्यादिवाक्ये लक्षणा तव मते व्यर्था ।। १०२ ।।

**(एकेन पदेन अखण्डचिन्मात्रबोधसम्भवेन सर्वशास्त्रवैयर्थ्यम्)**

किञ्च तत्पदेन त्वमितिपदेन वा लक्षणयाऽखण्डचिन्मात्रबोधसम्भवेन पदान्तरं व्यर्थमित्याह - **तदिति** ।

**तदा चैकपदेनैवाखण्डब्रह्मावबोधनात् ।**
**स्यात्पदान्तरवैयर्थ्यं निमित्तान्तरशून्यतः ।। १०३ ।।**

एकपदबोधितब्रह्मस्वरूप[1]भिन्नस्य भावस्याभावस्य वा धर्मस्य पदान्तरप्रवृत्तिनिमित्तस्य त्वन्मतेऽभावेन पदान्तरं व्यर्थमित्यर्थः ।। १०३ ।।

**(भेदभ्रमनिरासेन ऐक्यज्ञानार्थं पदान्तरं सार्थकमिति पक्षे द्वैतसिद्धिः)**

ननु ब्रह्मस्वरूपमात्रमवान्तरवाक्येन तदादिना च बोधितम् । न तु जीवेशयोरैक्यम् । ऐक्यज्ञानमेव भेदभ्रमविरोधित्वादपेक्षितम् । तच्च नैकेन पदेन सम्भवतीति सार्थकं पदान्तरमित्यत आह - **ऐक्यादेरिति** ।

**ऐक्यादेर्ब्रह्मभिन्नस्य भाने सखण्डता भवेत् ।**
**वाक्यार्थस्य सदा द्वैतसिद्धिस्तेनैव सम्भवेत् ।। १०४ ।।**

ब्रह्मभिन्नस्यैक्यादेर्वाक्यजन्यबोधे भाने वाक्यार्थस्य सखण्डता भवेत् । वाक्यं सखण्डार्थकं स्यात् । तच्च तवानिष्टम् । अपर्यायत्वे सति संसर्गागोचरप्रमाजनकत्वमेव प्रातिपदिकार्थमात्रपर्यवसायित्वं वाक्यस्याखण्डार्थकत्वं त्वदभिमतम् । ब्रह्मस्वरूपभिन्नस्य बोधने तद्भज्येतेत्यर्थः । तेनैवैक्यादिना सदा द्वैतसिद्धिर्भवेत् ।। १०४ ।।

ननु मिथ्याभूतमेवैक्यमिति न द्वैतसिद्धिरित्यत आह -**ऐक्यादेरिति** ।

---

१. भिन्नस्वभाव । - क.

**ऐक्यादेर्यदि मिथ्यात्वं श्रुत्यप्रामाण्यमापतेत् ।**
**सौगतच्छात्रता ते स्याच्छ्रुत्यप्रामाण्यमानिनः ।। १०५ ।।**

बाधितार्थकत्वमेव ह्यप्रामाण्यं तन्महावाक्यस्य स्यात् । तथा सौगतशिष्यत्वं तव स्फुटं स्यात् ।। १०५ ।।

**समस्तं वा पदं तत्त्वं स्यात्पूर्वपदलक्षणम् ।**
**शरीरी जायते तस्मात्तेन तिष्ठति पालितः ।। १०६ ।।**

पूर्वपदे लक्षणा यस्मिन् तत् । तेन तस्मात्तस्य तस्मिन्वा त्वं तत्त्वमिति समस्तं पदं वाऽस्तु । शरीरद्वारा जीवस्येश्वरादुत्पत्तिः । ईश्वरेण पालितो जीवस्तिष्ठति ।। १०६ ।।

**स्यात्तदाधारको जीवस्तस्यायं सेवकस्तथा ।**
**सुपां सुलुक् च सूत्रेणोक्तं स्वादेशादिकं स्फुटम् ।। १०७ ।।**

'अहं जीवसंज्ञो वै मयि जीवः समाहितः' ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । (गीता.७.७)
इत्यादिस्मृत्या जीवस्येशाधारकत्वमुक्तम् । 'सुपां सुलुक् च' इत्यादिसूत्रेण तृतीयादीनां सुरादेशो लुग्वा प्रकृतेऽस्तीति न लक्षणादिदोषः ।। १०७ ।।

वस्तुतस्तु 'ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसि' इत्यत्र तच्छब्देनैतदात्म्यं परामृश्यते न त्वात्मा । तस्य पुल्लिङ्गेन प्रक्रान्तत्वात्सम्भवति समानलिङ्गकपदोपस्थापितार्थपरामर्शेऽन्यादृशपरामर्शानौचित्यमित्याह - **प्रक्रान्त इति** ।

**प्रक्रान्तोऽक्लीबलिङ्गेनात्मा परामृश्यते न हि ।**
**क्लीबेन तत्पदेनात्र किन्त्वैतदात्म्यमेव हि ।। १०८ ।।**

अक्लीबेन पुल्लिङ्गेन ।। १०८ ।।

ततः किं स्यात्तत्राह - **अस्येति** ।

**अस्येतदात्मनो विष्णोस्त्वं सम्बन्ध्येतदात्मकः ।**
**सम्बन्धः प्रथितो वेदे परमेश्वरजीवयोः ।। १०९ ।।**

त्वमेतदात्मनः सम्बन्धी असि । एतदात्मनः इदमैतदात्म्यं बाहुलकादिदमर्थे ष्यञ् । निरर्थकस्वार्थष्यञपेक्षयैतस्याभ्यर्हितत्वात् । 'द्वा सुपर्णा सयुजा सखाया' (आथ.३.१) इत्यादौ जीवेशयोः सम्बन्धः सुप्रसिद्धः । तत्त्वमित्यादिना जीवेशयोः स्वामिसेवकत्वादिसम्बन्ध एव बोध्यते न त्वैक्यमिति भावः ।। १०९ ।।

**(सर्वस्य हरिणा व्याप्तत्वादैतदात्म्यम् उच्यते)**

उक्तार्थे स्मृतिमुदाहरति - **स इति** ।

**स स्रष्टा चैव संहर्ता नियन्ता रक्षिता हरिः ।**
**तेन व्याप्तमिदं सर्वमैतदात्म्यमतो विदुः ।। ११० ।।**

यतो जीवजडादिकं सर्वं तेन हरिणा व्याप्तमत ऐतदात्म्यमुच्यत इत्यर्थः ।। ११० ।।

**('स्वमपीत' इत्यत्र न ब्रह्माभेद उच्यते जीवस्य)**

ननु 'स्वमपीतो भवति' (छां.उ.६.८.१) इति श्रुत्या जीवेशयोरभेदो बोध्यत इत्यत आह - **भवतीति** ।

**भवति स्वमपीतोऽयमिति श्रुतिर्ब्रवीति हि ।**
**स्वकीयस्य हरेः प्राप्तिः सुप्तौ जीवस्य नित्यदा ।। १११ ।।**

स्वमात्मीयं हरिं सुषुप्तौ तिरोहितः सन् प्राप्तो भवतीत्यर्थः । अपेरपिधाने इणश्च गतौ निष्ठायाः कर्त्तरि शक्तेः क्लृप्तत्वात् । ऐक्ये योगरूढ्योरभावात् ।। १११ ।।

ननु सुप्तौ जीवेशयोरैक्यं स्यात्तत्राह - **प्राप्तिरिति** ।

**प्राप्तिर्न युज्यतेऽभेदे मुख्या हि वस्तुनः क्वचित् ।**
**भेदं सुप्तौ तथोत्क्रान्तौ सूत्रकृदाह तात्त्विकम् ।। ११२ ।।**

अभेदे प्राप्यप्राप्तृभावासम्भवः । न हि घटो घटं प्राप्नोतीति व्यवहारोऽस्ति। 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (ब्र.सू.१.३.४२) इति सूत्रेण । 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ.उ.६.३.१५) । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुतिभ्यां सुषुप्त्युत्क्रान्त्योर्जीवेशयोर्भेदेनैवाधीतत्वात् ।। ११२ ।।

'यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्त्य श्रान्तः संहत्य पक्षौ सँल्लयायैव ध्रियते एवमेवायं पुरुषः । प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ.उ.६.३.१९,२१) इति श्रुतिं सङ्गृह्णाति - **आकाश इति** ।

**आकाशेऽस्मिन् यथा श्येनः सुपर्णः परिपत्त्य वा ।**
**[1]पक्षौ संहत्य सँल्लयायैव ध्रियते पुमांस्तथा ।। ११३ ।।**

श्येनः सुपर्णो वा सँल्लयाय नीडाय ध्रियते तत्रैवायाति । तथा जागरादौ भ्रमणेन श्रान्तो जीवः श्रमापनोदाय सुप्तौ परेशालिङ्गितो भवतीत्यर्थः ।। ११३ ।।

सुप्तावीशाद्भिन्नतया स्थितस्य जीवस्य विद्यमानभेदाज्ञाने दृष्टान्तान्तरमाह - **प्रिययेति** ।

**प्रियया सम्परिष्वक्तो न बाह्यं वेद नान्तरम् ।**
**एवं प्राज्ञपरिष्वक्तो जीवो न वेद किञ्चन ।। ११४ ।।**

---

१. अत्र छन्दोभङ्गः सुधीभिः परिहार्यः ।

बाह्यं रूपादिकम् आन्तरं दुःखादिकं न वेद । तथा प्राज्ञेन परमात्मनाऽऽलिङ्गितो जीवः किञ्चन न वेदेत्यर्थः ।। ११४ ।।

**(नवकृत्वोपदेशप्रकरणे प्रथमदृष्टान्तस्य भेदपरत्वसमर्थनम्)**

वस्तुतस्तु यथा शब्दोनित्यः शब्दत्वादित्यत्र नित्योऽनित्यश्चेति पदच्छेदः [1]आकाशे दृष्टान्ते आद्य, घटे दृष्टान्ते द्वितीयः तथा भेदघटितनवदृष्टान्तानुरोधात्स आत्मातत्त्वमसीत्यत्रातत्त्वमसीति पदच्छेदः कार्यः । नञः सादृश्यार्थकत्वादित्याशयेन नव दृष्टान्तान् व्याख्यातुमारभते -

तत्रादौ जीवेशयोरत्यन्तभेदबोधनायासहायस्येशस्य तेजोबन्नादिसमस्तजगत्कारणत्वादिरूपं जीवेऽसम्भाव्यमानं महामाहात्म्यमुक्तम् । तच्चागमैकवेद्यं, न प्रत्यक्षमित्यतो जागरे जीवस्य स्वातन्त्र्याभिमानात्स्वापे तदभावात् जीवस्येशाश्रयत्वमानुभविकं कर्त्तुं 'स्वप्रान्तं मे सोम्य विजानीहि' (छां.उ.६.३.१) इत्युपक्रान्तम् । तत्र जागरस्वप्नयोर्देहेन्द्रियमनसां विक्षेपेण श्रान्तस्य जीवस्य श्रमापनोदाय स्वापे परेशाश्रयणमुक्त्वा 'स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपाश्रयत एवमेव खलु सोम्य मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते । प्राणबन्धनं हि सोम्य मनः । स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत्त्वमसि श्वेतकेतो' (छां.उ. ६.३.५) इत्युक्तं प्रथमदृष्टान्तं सङ्गृह्णाति - **यथेति** ।

**यथा सूत्रेण बद्धो विः परिपत्य दिशं दिशम् ।**
**अन्यत्राश्रयमप्राप्य बन्धनमेव याति हि ।। ११५ ।।**

विःपक्षी यत्र शङ्कौ सूत्रेण बद्धस्तमेवाश्रयतीत्यर्थः । मनोऽवबोध-

---

१. घटे दृष्टान्ते आद्य आकाशे दृष्टान्ते द्वितीयः - क.

स्वरूपो जीवः । प्राणयति जीवयति चेति प्राणः परेशस्तं श्रयतीत्यर्थः ।। ११५ ।।

(द्वितीयदृष्टान्तोऽपि भेदपरः)

ननु मत्तोऽन्यश्चेतनो मया कथं न दृश्यत इत्याशयवता पृष्टः 'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसानां समवहारमेकतां गमयन्ति ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति । स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्माऽ'तत्त्वमसि' (छां.उ.६.३.५) इति द्वितीयदृष्टान्तमुक्तवांस्तं सङ्गृह्णाति नानेति द्वाभ्याम् -

**नानावृक्षरसा भृङ्गैः सङ्गृहीताः परस्परम् ।**
**भिन्ना यथा विवेकं न स्वकीयं जानते तथा ।। ११६ ।।**

**इमाः सर्वाः प्रजाश्चेशं सुषुप्तौ प्राप्य नो विदुः ।**
**स्वस्मादन्यं हि चैतन्यं तत्सम्पत्स्यामहे वयम् ।। ११७ ।।**

मधुकृतो भ्रमरा मधुनिस्तिष्ठन्ति निर्मिमते । नानात्यानां विलक्षणानां रसानां समवहारं समूहम् एकतां मिश्रतां गमयन्ति । यथा ते तत्र विद्यमानं स्वीयं भेदं न जानन्त्यमुष्य वृक्षस्याहमित्येवमेवेमाः प्रजाः जीवा अविद्यया मोहिता विद्यमानं विवेकं न विदुः । तथा च विद्यमानभेदस्याज्ञानमेवोक्तम् । परमेश्वराश्रितत्वाज्ज्ञानादेव जीवस्य संसार इति भावः ।। ११६ ।। ११७ ।।

**विद्यमानस्य सत्यस्य भेदस्येश्वरजीवयोः ।**
**अज्ञानमेव सुप्त्यादौ न त्वेकता तयोः क्वचित् ।। ११८ ।।**

क्वचित् उक्तमिति शेषः ।। ११८ ।।

**(तृतीयदृष्टान्तस्य भेदपरत्वसमर्थनम्)**

नन्वचेतनै रसैर्माज्ञायि भेदो, मया चेतनेन कथं न ज्ञायेतेत्याशङ्कामपाकर्त्तुम् 'इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति । ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह' इति (छां.उ.६.३.८) इत्युक्तं तृतीयं दृष्टान्तं सङ्गृह्णाति - **वृष्टीति** ।

**वृष्टिद्वाराऽम्बुधेर्जाताः प्रवाहेणविशन्ति तम् ।**
**यथा नद्यो न जानन्ति वयं समुद्रतोऽन्यकाः ।। ११९ ।।**

**तथा स्वस्मिन् स्थितं विष्णुं न जानन्त्यावृताः प्रजाः ।**
**आगच्छामः सतो नित्यमिति भिदेशजीवयोः ।। १२० ।।**

अविद्ययाऽऽवृताः प्रजाः । गङ्गाद्या नदीदेवताः प्रागञ्चनात्प्राचीशब्दवाच्याः पुरस्तात्स्यन्दन्ते स्रवन्ति, प्रत्यञ्चनात्प्रतीचीपदवाच्याः पश्चात्स्यन्दन्ते, मेघद्वारेण समुद्रादुत्पन्ना उत्पन्नजलत्वात्समुद्रमेवापियन्ति विशन्ति, तथापि स समुद्र एव भवति । ता नदीदेवता यथा तत्र समुद्रे इयं गङ्गाऽहमस्मीयं तु यमुनाऽयञ्च समुद्र इत्येवमन्या अपि न विदुरेवमेवेमाः प्रजाः परेशादागत्यापि सत आगच्छामहे उत्पद्यामह इति न विदुः । एवं तत्र स्थिता अपि तमाश्रिता इति न विदुरित्यर्थः ।। ११९ ।। १२० ।।

**(तुरीयदृष्टान्तस्य भेदपरत्वसमर्थनम्)**

अस्त्वीशो भिन्नस्तथाऽपि जीवस्तदधीन इति कुत इत्याशङ्कामपाकर्तुम् -

'अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति । द्वितीयां जहात्यथ

सा शुष्यति । तृतीयां जहात्यथ सा शुष्यति । सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते । जीवेनाऽऽत्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' (छां.उ. ६.३.१०) इत्युक्तं चतुर्थं सङ्गृह्णाति - **अस्येत्यादिना** ।

**अस्यागस्य यदेकां हि शाखां जीवो जहात्यथ ।**
**सा शुष्यति तथा सर्वाः शुष्यन्ति तास्तदुज्झिताः ।। १२१ ।।**

अगस्य जीवरूपवृक्षस्य । तेनेशेनोज्झिता उपेक्षिताः जीवस्य मरणादिकं देहादिशोषणहत्यादिना ।। १२१ ।।

जीवपदेनात्र हरिरेवोक्त इत्याह - **जीवयतीति** ।

**जीवयत्यखिलं विष्णुरतो जीवपदोदितः ।**
**मोदमानः पृथक् प्रोक्तश्चेतनो जीवतो यतः ।। १२२ ।।**

जीवो हरिः यतो मोदमानश्चेतनो जीवयितुः सकाशात्पृथगुक्तः । न हि जडस्य देहादेर्मोदमानत्वं सम्भवति ।। १२२ ।।

**प्रभूतोऽनेन जीवेन पेपीयमानतां भजेत् ।**
**इति जीवाद्भिदा प्रोक्ताऽसुधारिणः स्फुटा यतः ।। १२३ ।।**

जीवपदार्थाद्धरेः साकाशादसुधारिणः स्फुटा भिदोक्ता ।। १२३ ।।

तात्पर्यमाह - **स्वातन्त्र्यमिति** ।

**स्वातन्त्र्यं परमेशस्य पारतन्त्र्यं च देहिनः ।**
**अत्रोक्तं तच्च भेदस्य जीवेशयोः प्रसाधकम् ।। १२४ ।।**

अत्र प्रकरणे तच्च स्वातन्त्र्यादिकं यथा वृक्षस्य सुखिनैव मया स्थेयमितीच्छासत्त्वेऽपि विघातिनि विद्यमानेऽपीशानुग्रहात्तथाऽवस्थानं, तद-

भावे चासत्यपि विघातिनि शरीरशोषणादिना नष्टं भवति, तथा मानुषादिदेहे परेशाधीनत्वमिति समुदायार्थः ।। १२४ ।।

**(पञ्चमनिदर्शनस्य भेद एव तात्पर्योपवर्णनम्)**

ननु जीवसत्तादिप्रदःपरेशोऽत्र देहे विद्यमानो मया न ज्ञायत इति कथम्? सौक्ष्म्यादिति चेन्न । जीवेन सूक्ष्मस्य स्वरूपस्य दृश्यमानत्वादिति शङ्कामपाकर्त्तुं 'यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्य' (छां.उ.६.३.११) इत्युक्तं पञ्चमं दृष्टान्तं सङ्गृह्णाति वटजीवेति द्वाभ्याम् -

**वटजीवस्थितो वृक्षः सूक्ष्मत्वान्नोपलभ्यते ।**
**तथा त्वयि स्थितो विष्णुः सूक्ष्मत्वात्तं न पश्यसि ।। १२५ ।।**
**जीवानां ब्रह्मविज्ञानभावो विद्यावतां सदा ।**
**अत्रोक्तस्तेन भेदस्य सिद्धिर्दृढा भवेत्सदा ।। १२६ ।।**

इदं फलं भिन्धि भिन्ने फले किं पश्यसीति पिता -

'अण्व्य इव सूक्ष्मा इमा धाना बीजानि पश्यामीति पुत्रः । अङ्गासां धानानां मध्ये एकां धानां भिन्धीति पिता । भित्वा भिन्नेति पुत्रः । अत्र भिन्नायां धानायां किं पश्यसीति पिता । किञ्चन न पश्यामीति पुत्रः । एवमुक्तवन्तमाह पिता । यमेतमणिमानं, भावभवित्रोरभेदात् परमसूक्ष्मं परमात्मानं, न निभालयसे न पश्यसि, अस्याणिम्नः सामर्थ्यादेव धानायां महान्न्यग्रोधस्तिष्ठति । अत्र वृक्षः प्रपञ्चः । फलं शरीरम् । धाना जीवाः । तत्र यथा सूक्ष्मवटबीजे दृश्यमानेऽपि यत्प्रभावाद्वटावस्थानं स बीजान्तर्गतः परमात्मा परमसूक्ष्मत्वान्न दृश्यते, तथा जीवादपि सूक्ष्मत्वात्तदन्तर्गतः परमात्मा न दृश्यत इत्युक्तं भवति ।। १२५ ।। १२६ ।।

**(षष्ठदृष्टान्तस्य भेद एव तात्पर्यसमर्थनम्)**

ननु वटावस्थानादिना कार्येणेश्वरसामर्थ्यं तावत्प्रत्यक्षमिव प्रतीयते ।

एवं तत्सामर्थ्ये दृश्यमानेऽपि तस्यादर्शनमित्येतत्कथं जानीयामित्याशङ्कायाम् 'यद्दोषा लवणमेतदुदकेऽवधाः अङ्ग तदाहरेति । तद्धावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति । सोम्य न निभालयसेऽत्रैव किल' (छां.उ.६.३.१३) इत्युक्तं षष्ठं दृष्टान्तं सङ्गृह्णाति निक्षिप्येति त्रिभिः -

**निक्षिप्य लवणं नीरे प्राहानय गुरुश्च तत् ।**
**न पश्यामीति वक्तारं प्रत्याहाऽऽचम्यतां त्वया ।। १२७ ।।**

**भक्षयामीति वक्तारं प्रत्याहेदं हि कीदृशम् ।**
**क्षारमिति प्रवक्तारं प्रत्याहैवं सदा त्वयि ।। १२८ ।।**

इदं जलं कीदृशम् ।। १२८ ।।

**विष्णुस्तिष्ठति सर्वेषामन्तर्नियामको विभुः ।**
**तदैश्वर्योपलम्भेऽप्यज्ञानिभिर्नैव दृश्यते ।। १२९ ।।**

यथा लवणं जले निक्षिप्तं न दृश्यते, तद्गुणः क्षारत्वमुपलभ्यते, तथा बीजादौ वटाद्यवस्थानकारणैश्वर्योपलम्भेऽपि जीवे स्थितो विष्णुर्नोपलभ्यत इत्यर्थः । अवधाय निक्षिप्य । तथा चकार पुत्रः । आह पिता यद्दोषा लवणमुदकेऽवधाः तदाहरेति । तल्लवणमुदके हस्तेनावमृश्य न विवेद पुत्रः, यथा विलीनमेवाऽत्यन्तं नष्टं वस्तु न विदन्ति तथा । अङ्गास्योदकस्यान्तात् पूर्वदिगवस्थितादवयवादुद्धृत्यैकदेशमाचामेति पिता । आचान्तवन्तं पिताऽऽह कथं तिष्ठतीति । लवणं लवणरसोपेतमित्याह पुत्रः । तल्लवणगुणे दृश्यमानेऽपि लवणं न दृश्यते । तथा सामर्थ्ये दृश्यमानेऽपि जीवे स्थितो हरिर्न दृश्यत इत्यर्थः ।। १२९ ।।

**(सप्तमदृष्टान्तस्य भेदपरत्वसमर्थनम्)**

एवंभूतो हरिरविद्यापटलपिहितनयनेन कथं दृश्यते प्राप्यते चेति

जिज्ञासायाम् 'यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीयतं ततोऽतिजने विसृजेत्' स यथा तत्र आनीतोऽपिनद्धाक्षो विसृष्टः 'तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गान्धारानेवोपसम्पद्येतैवमेवेहाचार्यवान् पुरुषो वेद' (छां.उ.६.३.१४) इत्युक्तं सप्तमं दृष्टान्तं सङ्गृह्णाति नेत्र इति द्वाभ्याम्-

**नेत्रे बद्ध्वा पुमान् कश्चिच्चोरैर्नीतो दिगन्तरम् ।**
**पृष्ट्वा ग्रामं स आयाति गन्धारान् विषयान् स्वकान् ।।१३०।।**

पुमानाध्वनिकः । विषयान् देशान् ।। १३० ।।

**तथाऽविद्यावृतो जीवोऽनाद्यविदितमीश्वरम् ।**
**सदाचार्योपदेशेन वेत्त्यथ प्राप्नुयात्सुधीः ।। १३१ ।।**

अनादिकालाविदितपरेशं सन्तश्च ते आचार्यास्तेषामुपदेशेन । अथ वेदनानन्तरम् । अनाद्यविद्यया हरेर्विमुखो लुप्तविवेकः संसारे पतितः भगवदनुग्रहाज्ज्ञातजिज्ञासो गुरूपदेशं लब्ध्वा क्रमापन्नानि श्रवणादीनि साधनान्यनुष्ठाय स्वजन्मभूमिं हरिं पश्यति प्राप्नोति चेत्युक्तं भवति ।। १३१ ।।

**(अष्टमदृष्टान्तस्य भेदपरत्वसमर्थनम्)**

ननु वृक्षदेहे परेशाधीनत्वमवगतं, मानुषे देहे तत्कथं जानीयामित्याशङ्कायां 'पुरुषं सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि माञ्जानासि मामिति । यदास्य वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति' (छां.उ.६.३.१५) इत्याद्युक्तमष्टमं दृष्टान्तं सङ्गृह्णाति - **पुंस इति** ।

**पुंसो वाङ् मनसि प्राणे मनः प्राणश्च तेजसि ।**
**परस्यां देवतायां हि तेजः सम्पद्यते यदा ।। १३२ ।।**

वागादीनां मन आदौ लये सति ।। १३२ ।।

**न जानाति तदा ग्रस्ताखिलव्यापारको नरः ।**
**रोगीव सुप्तो वोत्क्रान्तः पार्श्वस्थान् स्वान्न वेद हि ।। १३३ ।।**

**तथा परेशतन्त्रोऽपि तं न जानात्यविद्यया ।**
**अनाद्ययाऽऽवृतो जीवो बन्धपाशप्रमोचकम् ।। १३४ ।।**

रोगी यथा मुमूर्षुर्ग्रस्तव्यापारः पार्श्वस्थान्न वेद तथा सुषुप्त्यादौ परमात्मना सम्पन्नो जीवो बाह्यमाभ्यन्तरं न वेद । 'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ.उ.६.३.१५) इति श्रुत्यन्तरात् ।। १३३-१३४ ।।

**(नवमदृष्टान्तोऽपि अभेदप्रतिषेधकः)**

एवं सर्वाधारं सर्वप्रेरकं हरिं योऽत्यन्तभेदेन यश्चाऽभेदेन जानाति तयोः कीदृशं फलमित्याशङ्कायाम् 'पुरुषं सोम्योत हस्तगृहीतमानयन्त्यहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति । स यदि तस्य कर्त्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्द्धाय परशुं तप्तं प्रतिगृह्णाति । स दह्यतेऽथ हन्यते । स न दह्यतेऽथ स यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते .... न दह्यतेऽथ मुच्यत' (छां.उ.६.३.१६) इत्युक्तं नवमं दृष्टान्तं सङ्गृह्णाति **राज्ञ इति** चतुर्भिः -

**राज्ञो भटैः करं धृत्वा नीतः कश्चित्पुमानयम् ।**
**परीक्ष्यतां हि चोरः किं न वा तप्तमयः करे ।। १३५ ।।**

**तस्य दत्तं यदि स्तेनस्तदा दह्येत नान्यथा ।**
**चोरश्चेद्दण्डनीयोऽसौ नृपतेर्नान्यथा क्वचित् ।। १३६ ।।**

तस्य राजभटैरानीतस्य पुरुषस्य करे तप्तम् अयो दत्तं यदि स स्तेनश्चोरो भवेत्तदा दह्येत । ततोऽसौ नृपतेर्दण्डनीयः । अन्यथा चोरत्वाभावे न दह्येत न च दण्डनीयः ।। १३५-१३६ ।।

दार्ष्टान्तिकमाह - **अहमिति** ।

**अहमेव परं ब्रह्मेति ज्ञानी तस्करः स्फुटः ।**
**ब्रह्मतां परकीयां योऽपहरति [1]मन्दधीः ।। १३७ ।।**

परकीयामीश्वरनिष्ठां ब्रह्माहमस्मीत्यपहरति ।। १३७ ।।

**दण्ड्योऽसौ जगदीशेन नरकयातनादिभिः ।**
**जानानो हरितन्त्रोऽहं न दण्ड्यः परमेशितुः ।। १३८ ।।**

अहं ब्रह्माधीन इति जानन् न दण्ड्यः ।। १३८ ।।

**शब्दोनित्यो हि शब्दत्वादित्यत्र पदभेदनम् ।**
**दृष्टान्तस्यानुसारेण नित्योऽनित्यो द्विधा यथा ।**
**दृष्टान्तेषु नवस्वेवं भेदोक्तेरनुसारतः ।। १३९ ।।**

**स आत्मातत्त्वमित्यत्राऽतत्त्वं छेद्यं पदं बुधैः ।**
**सादृश्यादि नञा बोध्यं निर्मुक्तत्वादिना हरेः ।। १४० ।।**

यदा घटो दृष्टान्तस्तदाऽनित्यः, यदाऽऽकाशस्तदा नित्य इति पदच्छेदो यथा तथा नवदृष्टान्तेषु भेदोक्त्यनुसारादतत्त्वमिति पदच्छेदः ।

निर्मुक्तत्वज्ञानानन्दत्वादिना जीवस्य हरेः सादृश्यमुपदिश्यते ।। १३९ ।। १४० ।।

**('योऽसावसौ पुरुषः' इति श्रुत्यर्थः)**

'योऽसावसौ पुरुषः सोऽहमस्मि' (ईशावास्य) इत्यत्र परकीयप्रातिपदिकलक्षणापेक्षया विभक्तिलक्षणा लघीयसीत्याह - **दृश्यत इति** ।

**दृश्यते यः सदाऽऽदित्ये पुरुषः सोऽस्म्यहं श्रुतौ ।**
**विभक्तिलक्षणाऽतः स्याज्जघन्योभयतः पदे ।। १४१ ।।**

---

१. सुमन्दधीः इति पाठः स्यात् ।

उभयोः पदयोर्लक्षणा जघन्या । आदित्ये परमात्मा स मयीति विभक्तिलक्षणा लघीयसी ।। १४१ ।।

**(योऽन्यां देवतामुपास्त इति श्रुत्यर्थः)**

'योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति पशुरेव सः' (सुबालोपनिषत्, ४.१.२) इति श्रुतिं सङ्गृह्णाति - **य इति** ।

**यो नारायणतोऽन्यां हि देवतां सेवते नरः ।**
**पशुरेव स देवानां सम्यग्वेत्ति न मन्दधीः ।। १४२ ।।**

यः श्रीहरिभिन्नामिन्द्रादिदेवतामुपास्ते स देवानां पशुर्जीविका । हरिसेवकस्तु न तथा ।

न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यम् ।।
गतो मुकुन्दं परिहृत्य कृत्यम् ।।

(भागवते, ११.५.४२)

इतिस्मृतेः । अन्यथा 'अन्योऽसावन्योऽस्मि' इत्येतावतैव भेदोपासननिन्दासिद्धेरधिकस्य वैयर्थ्यापत्तेः ।। १४२ ।।

**अभेदोपासनया नैवाऽभेदसिद्धिः कथञ्चन ।**
**यतोऽन्येषामुपासाया अयथार्थत्वरूपता ।। १४३ ।।**

यतोऽन्येषां मायिनामुपासनाया अयथार्थत्वमाहार्यारोपत्वमतोऽभेदोपासनमात्रेण नाभेदसिद्धिः ।। १४३ ।।

'नान्योऽतोऽस्ति द्रष्टा । नान्योऽतोऽस्ति श्रोता । नान्योऽतोऽस्ति मन्ता । नान्योऽतोऽस्ति विज्ञाता' (बृ.उ.३.१.२३) इत्याद्यन्तर्याम्यक्षरप्रकरणस्थं वाक्यं सङ्गृह्णाति -

**नान्यो द्रष्टाऽस्त्यतो विष्णोरित्यक्षराधिकारके ।**
**अन्तर्याम्यधिकारे च द्रष्ट्रन्तरनिषेधकम् ।। १४४ ।।**

**प्रस्तुतमन्तरं विष्णुं तथाऽन्तर्यामिणं प्रभुम् ।**
**अतो गिरा परामृश्य ततोऽन्यो हि निराकृतः ।। १४५ ।।**

अतःशब्देनान्तर्यामिणं हरिं परामृश्य ततोऽन्यस्तत्तौल्यसाकल्यादिना द्रष्टा निराकृतः । जीवानां दर्शनस्पर्शनादि नानाविधज्ञानं सम्भावितम् । तदीशस्य साकल्येन सर्वविषयकमेव ज्ञानमित्यभिप्रायेण द्रष्टृश्रोत्रित्याद्युक्तम् । "पश्यत्यचक्षुः स शृणोत्यकर्णः" (गुह्यका.५२) इति श्रुतेः । मायिनस्त्वतोऽन्यो नास्तीत्येतावतैवालं शेषवैयर्थ्यम् ।। १४४-१४५ ।।

उक्तार्थं स्पष्टमाह - **तुल्य इति** ।

**तुल्ये भिन्नेऽन्यशब्दो हि स्वारस्याद्वर्त्तते स्फुटम् ।**
**तुल्यस्यैव निषेधोऽत्र द्रष्टुर्न द्रष्टृमात्रतः ।। १४६ ।।**

इतो ब्राह्मणादन्यमानयेत्यादावेतत्सदृश एवान्यो ब्राह्मणादिः प्रतीयते, न त्वत्यन्तं विजातीयः शूद्रादिर्लोष्ठादिर्वा । अतोऽन्तर्यामितुल्यद्रष्टृनिषेधे 'सविशेषणे हि' इति न्यायेन तुल्यत्वस्यैव निषेधः । मायिनस्तु दृङ्मात्रे चैतन्ये दृगाश्रयत्वरूपद्रष्टृत्वाद्यसम्भवेन वाक्यमसङ्गतमेव । "एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ" (बृ.उ.५.७.८) इत्यक्षरस्य हरेरदृष्टत्वादिकं साकल्येनैव । "अन्यथाऽऽत्मा वा अरे द्रष्टव्यः श्रोतव्यः" (बृ.उ.६.५.६) इत्यादिविरोधापत्तेः ।। १४६ ।।

**(यदूर्ध्वं गार्गि इति श्रुत्यर्थवर्णनम्)**

"यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षते" (बृ.उ.५,८.७) इति श्रुतिं सङ्गृह्णाति - **दिव इति** ।

**दिवो गार्गि यदूर्ध्वं स्याद् यदर्वाग्भूमितो भवेत् ।**
**मध्ये द्यावापृथिव्योर्यत्स सर्वव्यापकोऽक्षरः ।। १४७ ।।**

द्वितीयाभावे कस्य किं व्यापकम् । "एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" (बृ.उ.५.८.९) इति श्रुतेश्च ।। १४७ ।।

**(तदेतदक्षरमिति श्रुत्यर्थः)**

"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति कश्चन" (बृ.उ.५.८.७) इति श्रुतिं सङ्गृह्णाति - **प्राकृतेति** ।

**प्राकृतस्थूलतादीनामक्षरे स्यान्निवारणम् ।**
**अन्यथा व्यापकत्वस्य बोधकेन विरोधिता ।। १४८ ।।**

प्राकृतानां धर्माणां तादृशामेवाच्छायादिस्वभावानां निषेधः । अन्यथा द्वितीयमात्रनिषेधे प्रागुक्तव्यापकत्वबोधकश्रुतिविरोधः स्यात् ।। १४८ ।।

अन्तर्यामिप्रकरणस्य भेदपरत्वं "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" (ब्र.सू.१.२.२०) इत्यादिना सूत्रकृतोक्तमित्याह - **अन्तरिति** ।

**अन्तर्याम्यधिकारस्तु भेदमीश्वरजीवयोः ।**
**कण्ठतो वदतीत्याह श्रीबादरायणो हरिः ।। १४९ ।।**

स्फुटम् अन्तर्यामिप्रकरणं जीवेशाभिदां कण्ठतो वदतीत्याह ।। १४९ ।।

**(अतोऽन्यदार्तमिति श्रुत्यर्थः)**

'अतोऽन्यदार्त्तम्' (बृ.उ.३.४.२) इति श्रुतिं सङ्गृह्णाति - **अत इति** ।

**अतोऽन्तर्यामिणोऽन्यच्चार्त्तं दुःखि जन्तुकं सदा ।**
**आर्त्तिशब्दप्रयोगस्य दुःखे प्रचुरता स्फुटम् ।। १५० ।।**

अतोऽन्तर्यामिणः सकाशादन्यज्जीवजातमार्त्तं दुःखि 'आर्त्तं वा अभिदीक्षन्ते एकाष्टकायामभिदीक्षन्त' इत्यादिश्रुतिषु 'आर्तो जिज्ञासुरर्थार्थी' (गीता.७.१६) इत्यादिस्मृतिषु चार्त्तशब्दस्य दुःखिनि प्रचुरप्रयोगात् । शीतेनार्त्तं यथा स्यादभिदीक्षन्ते शीतेन दुःखिनो भवन्ति य एकाष्टकायां फाल्गुनकृष्णाष्टम्यां दीक्षन्त इत्यर्थः ।। १५० ।।

**(द्वितीयाद्वै भयं भवति इति श्रुत्यर्थः)**

'द्वितीयाद्वै भयं भवति' इति श्रुतिं व्याख्याति - **समानादिति** ।

**समानादधिकाल्लोके विरुद्धाद् दृश्यते भयम् ।**
**द्वितीयाद्भयमेतीत्यनुवदति श्रुतिः[1] परम् ।। १५१ ।।**

न च 'यन्मदन्यन्नास्ति कस्मान्नु बिभेमि' (छां.उ.३.४.२) इति श्रुत्या द्वितीयमात्रस्य भयहेतुत्वमुक्तम् । "आचार्यवान् पुरुषो वेद' (छां.उ. ६.१४.२) 'स एनान् ब्रह्म गमयति' (छां.उ.४.३.९) 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तेनामृतत्वमेति" (छां.उ.६.३.१४) इति श्रुतिभिः -

'तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्' । (भ.गी.१२.७)

इत्यादिस्मृतिभिश्च सह विरोधापत्तेः । यद्यस्मान्मदन्यन्मम भयहेतुर्नास्ति किं त्वनाद्यविद्ययाऽऽवृतो विषयाद्यासक्तोऽहमेव स्वभयहेतुरतः कस्माद् बिभेमीत्यर्थः ।। १५१ ।।

'तस्मादेकाकी बिभेति सहायमीक्षाञ्चक्रे' (बृ.उ. ३.४.२), 'तस्मादेकाकी न रमते' (बृ.उ.३.४.३) इति पूर्वोत्तरवाक्यं सङ्गृह्णाति - **रमत इति** ।

**रमते न स एकाकी सहायं वाञ्छतीतरम् ।**
**इति पूर्वोत्तराणां स्याद्वाक्यानां वैशसं भृशम् ।। १५२ ।।**

---

१. परा इति पाठः भवेत् ।

वैशसं विरोधः ।। १५२ ।।

**(य एतस्मिन्नुदरमन्तरं कुरुत इत्यत्र स्वगतभेद एव निषिध्यते)**

'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' (तै.उ. २.१६) इति श्रुतिं व्याख्याति - **उदरमिति** ।

**उदरमन्तरं कुर्यात् यो भयं यातीति च श्रुतौ ।**
**एतस्मिन्निति शब्दाद्धि स्वगतभेदवारणम् ।। १५३ ।।**

एतस्मिन् परेशे योदरमीषदप्यन्तरं भेदबुद्धिं कुरुते तस्य भयं भवतीति ब्रह्मणि ब्रह्मभेदधीर्वार्यत इत्यर्थः ।। १५३ ।।

नन्वप्रसक्तप्रतिषेधः स्यात्तत्राह - **नियम्येति** ।

**नियम्यभेदतो विष्णोरवतारादितस्तथा ।**
**लोकादिभेदतः प्राप्तो निवार्यतेऽनया गिरा ।। १५४ ।।**

नियम्यभेदेनावतारादिना प्राप्तो भेदो हरौ निवार्यतेऽनया श्रुत्या ।। १५४ ।।

**(विभेदजनक इति स्मृत्यर्थः)**

**विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।**
**आत्मनो ब्रह्मणोऽभेदमसन्तं कः करिष्यति ।। १५५ ।।**

देवमनुष्यतिर्यगाद्यभेदप्रयोजकज्ञाने भगवत्प्रसादादात्यन्तिकं नाशं गते सति ब्रह्मणः आविर्भूतबृहद्गुणस्यात्मनो जीवस्यासन्तमस्वाभाविकमुक्ताभेदं तद्धियं कः करिष्यति न कोऽपीत्यर्थः ।। १५५ ।।

**('अस्त्यन्य' इति श्रुत्यर्थवर्णनम्)**

"अस्त्यन्यो भूतात्मा स एव एषोऽभिभूतः प्राकृतैर्गुणैरित्यथोऽभिभूतत्वात्सम्मूढः सम्मूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यत्" इति मैत्रायणीयश्रुतिं सङ्गृह्णाति - **अनाद्यविद्यया इति** ।

**अनाद्यविद्यया मूढो जीवो वेत्ति न माधवम् ।**
**प्रेरकं सर्वभावानां हृदये सर्वदा स्थितम् ।। १५६ ।।**

**(ममैवांश इति स्मृत्यर्थः)**

'ममैवांशो जीवलोके जीवभूतः सनातनः ।(गीता.१५.७)

इत्यादिना जीवेस्येशांशत्वोक्त्याऽभेदसिद्धिरित्याह - **तदधीनस्येति** ।

**तदधीनस्य सादृश्यं लोकेंऽशत्वं प्रकीर्त्यते ।**
**पुत्रदायादिकस्यापि चांऽशत्वं भण्यते स्फुटम् ।। १५७ ।।**

**नानार्थकोंऽशशब्दोऽयं प्रसिद्धो लोकवेदयोः ।**
**अतोंऽशशब्दतो भेदः सिद्ध्यतीश्वरजीवयोः ।। १५८ ।।**

सदृशत्वे सति तदधीनत्वं जीवस्य तदंशत्वम् । अंशशब्दो हि नानार्थः । द्रोणो बृहस्पतेर्भागो, दुर्वासा रुद्रांशः, कर्णः सूर्यांशः, भ्रात्रंशो धनमित्यादिव्यवहारात् ।। १५७-१५८ ।।

**तदधीनत्वसादृश्यं प्रतिबिम्बपदोदितम् ।**
**ततोऽपि स्याद्भिदासिद्धिर्गोविन्दप्राणधारिणोः ।। १५९ ।।**

तदधीनत्वेन सहितं तत्सादृश्यं तत्प्रतिबिम्बत्वम् । ततोऽपि जीवस्येशप्रतिबिम्बत्वबोधकवाक्यात् ।। १५९ ।।

**(प्रतिबिम्बः न बिम्बाभिन्नः नापि मृषाभूतः)**

ननु प्रतिबिम्बस्य मिथ्यात्वादीशभिन्नो वस्तुतो जीवो नास्ति क्व भेदसिद्धिस्तत्राह - **अत्यन्तमिति** ।

**अत्यन्तं बिम्बतो भिन्नो दृश्यते हि परीक्षकैः ।**
**प्रतिबिम्बो हि लोके स्याच्छायावद्वास्तवो मतः ।। १६० ।।**

यथा लोके पुंछाया ततो वस्त्वन्तरं तत्समसत्ताकं तथा बिम्बसमसत्ताकस्ततो भिन्नः प्रतिबिम्बः ।। १६० ।।

**चैत्रच्छाया यथा भिन्ना प्रतिबिम्बस्तथा ततः ।**
**पार्श्वस्थैर्गृह्यते नित्यं न त्वभिन्नतया क्वचित् ।। १६१ ।।**

**चैत्रस्य प्रतिबिम्बो हि दृष्टश्चैत्रो न दृश्यते ।**
**इति व्यवहृतिर्भेदं विना नृणां कथं भवेत् ।। १६२ ।।**

ततो बिम्बाद्भिन्नतया नित्यं सदा दृश्यते ।। १६१ ।। १६२ ।।

ननु प्रतिबिम्बोत्पादकाभावेनाऽकारणकोत्पत्त्या मिथ्यात्वमिति तत्राह - **परिवेषेति** ।

**परिवेषेन्द्रचापादेरिव हेतुः प्रकल्प्यते ।**
**तस्योत्पत्त्यनुरोधाद्धि सत्यं वस्तु तदिष्यते ।। १६३ ।।**

चन्द्रादिपरिवेषादीनामिव तस्य कारणं कल्प्यते ।। १६३ ।।

**न शुक्तिरूप्यवत्तस्य बाधोऽनुभूयते क्वचित् ।**
**किन्त्वासीत्प्रतिबिम्बोऽत्र सत्यतैवाऽनुभूयते ।। १६४ ।।**

बाध एवारोपे मानम् । न च प्रतिबिम्बस्य सोऽनुभूयते ।। १६४ ।।

**(रूपं रूपम् इति श्रुत्यर्थः)**

'रूपं रूपं प्रतिरूपो बभूव ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' । (ब्र.बि.१२)

इत्यादिश्रुतिं व्याख्याति - **प्रतीति** ।

**प्रतिवस्तुनियन्तारं ब्रवीति प्रतिरूपगीः ।**
**एकधा मूलरूपेणाऽवतारादितया बहुः ।। १६५ ।।**

रूपं जीवादिकं प्रति नियामकतया प्रतिरूपो हरिः मूलरूपेणैकधाऽवतारान्तर्यामित्वादिना बहुधेति श्रुत्या कथ्यते ।। १६५ ।।

माय्यभिमतं प्रतिबिम्बत्वं तु जीवस्य न सम्भवतीत्याह - **उपाधीति**।

**उपाध्यन्तर्गतस्य स्यात्र प्रतिबिम्बनं क्वचित् ।**
**न जलादिनिमग्नस्य घटादेः प्रतिबिम्बनम् ।। १६६ ।।**

तथाविद्यान्तर्गतस्य न तत्र प्रतिबिम्बसम्भवः ।। १६६ ।।

ब्रह्मणोंऽशतोऽविद्यान्तस्थत्वं भागेन बहिःस्थत्वं चेत्सांशतापत्तिः । ननु जले नभस इवाविद्यादौ ब्रह्मप्रतिबिम्बो युक्तस्तत्राह -

**नाविद्यातो बहिर्ब्रह्म सांशतायाः प्रसङ्गतः ।**
**आकाशस्य तु जन्यत्वादिष्टैव सांशताऽऽवयोः ।। १६७ ।।**

आकाशस्याऽवयोः सांशत्वाज्जलादितो बहिःस्थभागस्य प्रतिबिम्बो युक्तो न तु निरंशस्य ब्रह्मणः ।। १६७ ।।

आकाशस्य प्रतिबिम्बोऽसिद्ध इत्याह - **नक्षत्रेति** ।

**नक्षत्रादिप्रभाया वा प्रतिबिम्बो न खस्य हि ।**
**अन्यथा चाक्षुषो न स्याद्बिम्बस्याऽचाक्षुषत्वतः ।। १६८ ।।**

नक्षत्रादिप्रभाया एव प्रतिबिम्बो न तु खस्याकाशस्य, अन्यथाऽचाक्षुषस्य प्रतिबिम्बश्चाक्षुषः कथं स्यात् ।। १६८ ।।

नन्वचाक्षुषबिम्बस्याऽपि प्रतिबिम्बश्चाक्षुषः स्यात्तत्राह -

**धर्माधर्मपिशाचादेरयोग्यस्य च वस्तुनः ।**
**चाक्षुषं प्रतिबिम्बं ते स्यादन्यथा सदा स्फुटम् ।। १६९ ।।**

तस्मान्नाचाक्षुषबिम्बस्य प्रतिबिम्बश्चाक्षुषः ।। १६९ ।।

**(नाविद्यया ब्रह्मणः जीवत्वम्)**

ननु कौन्तेयस्य राधेयत्ववदविद्यया ब्रह्मण एव जीवत्वमित्यत आह - **सर्वेति** ।

**सर्वभूतनियन्तारं दोषगन्धोज्झितं सदा ।**
**परानन्दैकतानं हि स्वतन्त्रं परमेश्वरम् ।। १७० ।।**

जीवभावापन्नं मन्यन्त इत्युत्तरेणान्वयः । सदा दोषास्पृष्टं सर्वनियामकम् ।। १७० ।।

**अनाद्यविद्यया जीवभावापन्नं कुबुद्धयः ।**
**मन्यन्ते श्रुतिसिद्धान्तदूषकास्तामसा जनाः ।। १७१ ।।**

**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ।**
**सर्वज्ञाज्ञविभागं हि स्पष्टमाह जनार्दनः ।। १७२ ।।**

अविद्यानियन्तारमविद्यावशं मन्यन्ते ।

'अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी' । (गीता.१८.३२)

इति स्मृत्या विपरीतज्ञानवत्त्वं तामसत्वमुक्तम् ।। १७१ ।। १७२ ।।

**विनोपदेशकं ज्ञानमविद्याभञ्जनं तथा ।**
**कथं स्यात्सर्ववेदान्तविरोधो दुस्तरो भवेत् ।। १७३ ।।**

नित्यसर्वज्ञमुपदेष्टारं विना ज्ञानमविद्याभङ्गश्च कथं स्यात् । जीवादौ श्रुतिसमन्वयं निवार्य परेशे प्रतिपादयतः समन्वयाध्यायस्योच्छेदः स्यात् । निरीश्वरसाङ्ख्यबौद्धादिमतनिरासश्च सूत्रकृतोऽसङ्गतः स्यात् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" (बृ.उ.४.४.२२) "आचार्यवान् पुरुषो वेद । स एनान् ब्रह्म गमयति" (छां.उ.६.३.१४) इत्यादि श्रुतीनां -

'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' । (भ.गी.७.१४)

इत्यादिस्मृतीनां च विरोधः । एतेनाविद्याद्यवच्छिन्नश्चेतनो जीवो मायाद्यवच्छिन्नः परेश इति निरस्तम् । अविद्यैकदेशावच्छिन्नत्वे सदेश-

त्वापत्तेः । कृत्स्नावच्छिन्नत्वे कृत्स्नस्य जीवत्वेशत्वान्यतरत्वापत्त्याऽभेदासिद्धेः ।। १७३ ।।

**(नेशजीवयोर्भेदो मायिकः)**

नन्वस्तु जीवेशयोर्मायिको भेदस्तत्राह - **मायेति** ।

**मायामोहं विनेशस्य न स्यान्मिथ्यार्थदर्शनम् ।**
**मायामोहे त्वनीशः स्यात् श्रुतिपीडा तदा भवेत् ।। १७४ ।।**

तदा परेशमोहाङ्गीकारे 'यः सर्वज्ञः' इत्यादिश्रुतिविरोधः स्यात् ।। १७४ ।।

ननु मायामोहं विनाप्यैन्द्रजालिकस्य मिथ्यार्थदर्शनमित्यत आह - **स्वेति** ।

**स्वमायारचितानर्थान्न पश्यत्यैन्द्रजालिकः ।**
**अपरोक्षतया किन्तु जानाति स परोक्षतः ।। १७५ ।।**

ऐन्द्रजालिको नोत्पादयति न चाऽपरोक्षतः पश्यति ।। १७५ ।।

ननु तर्हि कथं वदतीममाम्रं पश्यन्त्वित्यत आह - **गुर्विति** ।

**गुरूपदेशतो वैद्यो ज्ञातौषधप्रभावकः ।**
**आहेदमौषधं रोगं नाशयतीममाशु हि ।। १७६ ।।**

यथा गुरूपदेशादिना ज्ञातौषधप्रभावो वैद्यो रोगानापरोक्ष्येऽपीदमोषधमिमं रोगमाशु नाशयतीति वदति ।। १७६ ।।

**इतो मन्त्रादितो लोका भ्राम्यन्तीत्थं प्रतारकः ।**
**जानन्नाहेम आम्राद्या दृश्यन्तां ये मया कृताः ।। १७७ ।।**

**अतीतानागतानर्थान् व्यवहितांस्तथाऽसतः ।**
**मन्त्रौषधप्रभावेन दर्शयत्येव वञ्चकः ।। १७८ ।।**

लोका इतो मन्त्रादित इत्थं भ्राम्यन्तीति गुरूपदेशादिना जानन् दृश्यन्तामित्यादिकं वदति न तूत्पादयति पश्यति च ।। १७७ ।। १७८ ।।

**(अमायिना हरिणोपदिष्टो भेदस्तात्त्विक एव)**

हरेः प्रतारकत्वं न सम्भवतीत्याह - **अत्याप्तेनेति** ।

**अत्याप्तेन परेशेनोपदिष्टा तात्त्विकी भिदा ।**
**सर्वज्ञकर्तृकत्वेन तत्पालितत्वतस्तथा ।। १७९ ।।**

'उत्तमः पुरुषस्त्वन्यः' (भ.गी.१५.१७) इत्याप्तेनोपदिष्टा सत्यैव । प्रपञ्चो वास्तव इत्युत्तरेणान्वयः ।। १७९ ।।

**प्रपञ्चो वास्तवः सर्वोऽन्यथा स्याद्व्याहतिः स्फुटम् ।**
**न शुक्तिं तत्त्वतो जानन् सर्ववित् रूप्यपालकः ।। १८० ।।**

**प्रपञ्चो नित्य एवाऽयं नदीप्रवाहवच्चलः ।**
**स्वकाले सत्य एव स्यात् कालान्तरे विनश्यति ।। १८१ ।।**

अन्यथा विश्वस्य मिथ्यात्वे सर्वज्ञकर्तृकं तत्पालनादिकं व्याहतं स्यात्। न हि शुक्तितत्त्वं जानन् रूप्यं पालयति ।। १८० ।। १८१ ।।

**(विश्वस्य सत्यत्वे तत्कर्ताऽनन्तगुणः सिद्ध्यति)**

ननु विश्वसत्यत्वे को लाभस्तत्राह - **सत्यस्येति** ।

**सत्यस्यानित्यरूपस्य प्रपञ्चस्योररीकृतौ ।**
**सिद्ध्यतीशस्ततः कर्त्ता मोक्षादिदायको हरिः ।। १८२ ।।**

**मिथ्या विश्वं तथानीशं मायिकं चेति भाषणम् ।**
**शून्यवादिनये युक्तं वैदिकानां मते न हि ।। १८३ ।।**

अत एते मायिनः वैदिकाभासा एव ।। १८२, १८३ ।।

**स्वप्नसाम्यतया मिथ्या प्रपञ्च इति भाषणम् ।**
**शून्यवादिनये युक्तं न वैदिकनये क्वचित् ।। १८४ ।।**

'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र.सू.२.२.२९) इति स्वप्नसाम्यस्य जगति सूत्रकृता निरासात् ।। १८४ ।।

**(न स्वप्नः प्रातीतिकः अपि तु बौद्धोक्तसत्ताभेद एव तथा)**

ननु स्वाप्नः प्रातीतिकः तद्वैलक्षण्यं जगति सूपपन्नमत आह - **सत्तेति**।

**सत्ताभेदोऽपि लोकेऽस्मिन् तेनैव कल्पितो वृथा ।**
**लोकानां वञ्चनायैव श्रौतिनां न तथोचितम् ।। १८५ ।।**

तेन शून्यवादिनैव ।। १८५ ।।

बौद्धवाक्यमुदाहरति - **द्वे इति** ।

**द्वे सत्त्वे समुपाश्रित्य बौद्धानां धर्मदेशना ।**
**लोके सांवृतसत्यं हि शून्यं च परमार्थतः ।। १८६ ।।**

**सत्त्वं तु द्विविधम्प्रोक्तं सांवृतं पारमार्थिकम् ।**
**सांवृतं व्यवहार्यं स्यान्निवृत्तौ पारमार्थिकम् ।। १८७ ।।**

परमार्थतः परमार्थम् ।। १८६ ।। १८७ ।।

**इति बौद्धोक्तिमाश्रित्य वैदिकप्रक्रिया कृता ।**
**लोकानिष्टप्रदास्ते ह्युपेक्षणीया बुभूषुभिः ।। १८८ ।।**

कृता मायिभिरिति शेषः ।। १८८ ।।

**(परापरप्रमेये बौद्धमायिनोः साम्यमेव)**

प्रक्रियामाह - **सत्त्वेति** ।

**सत्त्वासत्त्वादिना विश्वं प्रकारान्तरतस्तथा ।**
**अनिर्वाच्यत्वतो मिथ्या सौगतस्यापि सम्मतम् ।। १८९ ।।**

सत्त्वासत्त्वादिना मायिनो विश्वमनिर्वाच्यं यथा तथा सौगतस्यापि सत्त्वासत्त्वाभ्यां प्रकारान्तरेण सदसदात्मकत्वादिनानिर्वाच्यं विचारासहत्वं सम्मतमित्यर्थः ।। १८९ ।।

**प्रामाणिकस्य मिथ्यात्वं मायिसौगतयोः समम् ।**
**अप्रमाणं स्वतः सिद्धं शून्यं ब्रह्म तयोः समम् ।। १९० ।।**

प्रत्यक्षादिमानसिद्धस्य मिथ्यात्वमुभयोः समम् । शून्यं ब्रह्म च स्वतः सिद्धमित्यप्यप्रामाणिकं द्वयोः समम् ।। १९० ।।

**शून्यविवर्त्तनं विश्वं सौगतस्यास्ति धीकृतम् ।**
**ब्रह्मविवर्त्तनं सर्वं मायावादिनये तथा ।। १९१ ।।**

**शून्यभावो यथा मोक्षः सौगतस्य वृथा मतः ।**
**ब्रह्मभावस्तथा मोक्षो मायावादिनये मुधा ।। १९२ ।।**

अतात्त्विकोऽन्यथाभावो विवर्त्तः प्रपञ्चः शून्यब्रह्मणोः । यथा शुक्ति-विवर्त्तो रूप्यं तद्वत् ।। १९१ ।। १९२ ।।

**सुखाननुभवस्तुल्यो मोक्षे द्वयोर्हि सम्मतः ।**
**अज्ञातसुखरूपत्वं वक्तुं शून्यस्य शक्यते ।। १९३ ।।**

अनुभाव्यानुभवित्रनुभवविभागाभावो मोक्षे द्वयोः समः ।। १९३ ।।

**विश्वाधिष्ठानता तेन शून्यस्याङ्गीकृतैव हि ।**
**नृशृङ्गाद्यसतो भेदो जगति बौद्धसम्मतः ।। १९४ ।।**

**मायावादिभिरीशो हि स्वीक्रियते स्वकल्पितः ।**
**बौद्धेनापि तथाऽऽचार्योऽङ्गीकृतो ज्ञानदायकः ।। १९५ ।।**

**युक्तं बौद्धस्य नाचार्यः स्वेनैव कल्पितो यतः ।**
**मायिमतं न युक्तं हि स्वेनैव कल्पितो गुरुः ।। १९६ ।।**

शून्यब्रह्मणोर्विश्वाधिष्ठानत्वमुभयोः समम् ।। १९४ ।। १९५ ।। १९६ ।।

उभयसाधारणदोषमाह - **स्वेति** ।

**स्वकल्पितेन चेदर्थसिद्धिर्लोके तदा न हि ।**
**भवेद्दरिद्रता क्वाऽपि धनितैव सदा भवेत् ।। १९७ ।।**

सर्वे लोकाः स्वकल्पितसुखवन्त एव स्युर्दुःखी कोऽपि न स्यादित्यर्थः ।। १९७ ।।

**(स्वकपोलकल्पितेनार्थसिद्धौ सर्वसङ्करः)**

मिथ्याभूतस्य स्वकल्पितस्यार्थक्रियाकारित्वे बाधकमाह - **भवेदिति**।

**भवेदनन्नमन्नं हि दुःखादिकं सुखं भवेत् ।**
**स्वर्गादिः स्वप्नयागात्स्यात् ब्राह्मणत्वेन कल्पितः ।। १९८ ।।**

स्वकल्पितं चेदर्थक्रियाहेतुस्तदा सर्वव्यवहारसङ्करः स्यादित्यर्थः ।। १९८ ।।

**शूद्रो यागाधिकारी स्यादाप्नुयाच्च फलं ततः ।**
**गुञ्जास्वारोपितो वह्निर्भवेत्तृणादिदाहकः ।। १९९ ।।**

**अमृतप्रज्ञया भुक्तं विषं न मारकं भवेत् ।**
**विषबुद्ध्यामृतं भुक्तं मारयेत् भक्षकं क्वचित् ।। २०० ।।**

ब्राह्मण्यां शूद्रादुत्पन्न आरोपितब्राह्मण्यश्चाण्डालोऽपि यागानुष्ठानफलं लभेदित्यर्थः ।। १९९ ।। २०० ।।

**शूद्रधिया हतो विप्रः सुषुप्तः केनचित्ततः ।**
**ब्रह्महत्या न तस्य स्यात्तथाऽऽरोपविवर्जनात् ।। २०१ ।।**

**न चोत्थानं सुषुप्तस्य स्याददृष्टादिवर्जनात् ।**
**तदानीं कल्पना नास्ति तां विना कल्पितं न हि ।। २०२ ।।**

स्वस्याप्यारोपाभावार्थं सुषुप्त इति ।। २०१ ।। २०२ ।।

**(यदर्थक्रियाकारि तत्सत्यमेव)**

**भयकम्पादिहेतुः स्यात् स्वप्नादेर्ज्ञानमेव हि ।**
**अरिष्टादिनिदानं स्यात्तरणिसुषिरादिधीः ।। २०३ ।।**

स्वाप्नाङ्गनालिङ्गनादिज्ञानमेव सुखादिहेतुः सूर्यसुषिरादिज्ञानमेवारिष्टादिहेतुस्तच्च सत्यमेवेत्यर्थः ।। २०३ ।।

**रज्वाद्यारोपिताह्यादेः कार्षापणादिकस्य च ।**
**हेतुर्ज्ञानं भवेत्सत्यं भये व्यवहृतौ तथा ।। २०४ ।।**

कार्षापणादिज्ञानं तु सत्यमेव ।। २०४ ।।

ननु ध्वनिगतं वर्णेष्वारोपितह्रस्वदीर्घत्वादिकं नगो नाग इत्यर्थविशेषधीहेतुस्तत्राह - **नग इति ।**

**नगो नागो रमा रामेत्यादौ ज्ञानं हि कारणम् ।**
**अर्थविशेषविज्ञाने ह्रस्वत्वादेर्नार्थः क्वचित् ।। २०५ ।।**

ह्रस्वत्वादेर्ज्ञानमेवार्थविशेषधीहेतुर्ह्रस्वदीर्घादयो न हि । न हि नित्या नाना ककारास्तथा गकारादयो नापि ह्रस्वत्वादिकम् ।। २०५ ।।

**(मिथ्यार्थविषयकज्ञानं सत्यमेव)**

ननु मिथ्यार्थस्य ज्ञानमपि मिथ्या तत्राह - **ज्ञानमिति ।**

**ज्ञानं तु सत्यमेवास्ति तद्बाधो न हि कुत्रचित् ।**
**तच्चोपलक्षणं ज्ञाने न स्यात् विशेषणं क्वचित् ।। २०६ ।।**

बाध एवारोपे मानं, स तु ज्ञाने नाऽस्ति । न हि रूप्यं नास्तीतिवत्तज्ज्ञानं नास्तीति धीरस्ति । ननु मिथ्याभूतविषयविशिष्टज्ञानस्य हेतुत्वे विशेषणतया मिथ्याभूतविषयस्यापि हेतुत्वं स्यात्तत्राह - **तच्चेति ।**

यथा घटोपलक्षितध्वंसात्यन्ताभावयोर्घटकालदेशभिन्नवृत्तित्वेऽपि न घटस्य तद्वृत्तित्वं तथा ज्ञानस्य हेतुत्वेऽपि विषयस्य न हेतुत्वमित्यर्थः ।। २०६ ।।

एतदेव स्फुटयति - **अतीतेति** ।

**अतीतानागतादीनां ज्ञानस्य हेतुता स्फुटम् ।**
**दृष्टा हि सुखदुःखादौ न विषयस्य हेतुता ।। २०७ ।।**

तत्र मिथ्याभूतोऽपि विषयो नाऽस्तीत्यर्थः ।। २०७ ।।

**(ज्ञानयोर्भेदे न विषयभेदः हेतुः)**

नन्वसर्पज्ञानात्सर्पज्ञानं भिन्नम् । विषय एव तत्र भेदक इत्यसतो भेदधीजनकत्वं स्यात्तत्राह - **ज्ञानानामिति** ।

**ज्ञानानां कारणभेदात्कार्यभेदाच्च कुत्रचित् ।**
**भवेत्परस्परं भेदो न तु विषयभेदतः ।। २०८ ।।**

अन्यथैकघटादिविषकज्ञानानां भेदो न स्यात् ।।२०८।।

विश्वं यद्यारोपितं तदा साधिष्ठानं स्यात् । तच्च न सम्भवति । सामान्यतो ज्ञातत्वे सति अज्ञातविशेषवत्त्वं ह्यधिष्ठानत्वे तन्त्रम् । तच्च निर्विशेषे निःसामान्ये ब्रह्मणि नास्तीत्याह - **इदमिति** ।

**इदंत्वेन हि विज्ञातं रूप्यस्य शुक्तितादिना ।**
**अधिष्ठानं भवेन्नाऽस्ति निर्विशेषचितो हि तत् ।। २०९ ।।**

[1]तस्मान्न निर्विशेषचैतन्यं विश्वभ्रमाधिष्ठानम् ।। २०९ ।।

---

१. इदं वाक्यं ख कोशे न पठ्यते ।

'विश्वं सत्यं' 'यच्चिकेत सत्यमिति तन्न मोघम्' (ऋग्वेद, १०.५५.६) इत्यादिश्रुतिमुदाहरति - **विश्वमिति** ।

**विश्वं सत्यमिति प्राह जगतः सत्यतां श्रुतिः ।**
**वर्त्तमानतयाऽध्यक्षं गृह्णाति सत्यतोऽन्ततः ।। २१० ।।**

**(कालत्रयेऽपि विश्वसत्वबोधिका श्रुतिः**
**न वर्तमानमात्रग्राहिप्रत्यक्षसिद्धार्थानुवादिनी)**

**श्रुत्या त्रैकालिकं सत्त्वमतीन्द्रियादिकस्य च ।**
**बोध्यते तेनैव स्यादननुवादकता श्रुतेः ।। २११ ।।**

घटः सन्नित्यादिप्रत्यक्षं वर्त्तमानतया सत्त्वं गृह्णाति, श्रुतिस्त्रैकालिकं सत्त्वं बोधयतीति नानुवादिनी ।। २११ ।।

**ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः ।**
**सत्याद् भूतानि जातानि सत्यं भूतमयं जगत् ।। २१२ ।।**

**इत्याश्वमेधिकेऽप्युक्ता स्फुटं विश्वस्य सत्यता ।**
**अतो विश्वमृषात्वाद्यं विरुद्धं श्रुतिशेखरैः ।। २१३ ।।**

आदिनाऽऽत्मनो नैर्गुण्यादिकम् ।। २१२ ।। २१३ ।।

**(सलिल एक इति श्रुत्यर्थः)**

'सलिल एको द्रष्टाऽद्वैतो भवति' (बृ.उ.६.३.३२) इति श्रुतिं सङ्गृह्णाति - **एक इति** ।

**एको मुख्यत्वतो द्रष्टाऽद्वितीयः समशून्यतः ।**
**सहायाभावतो वाऽऽसीन्न द्वैताभावतो जले ।। २१४ ।।**

एको मुख्योऽद्वितीयोऽसहायः । समाभ्यधिकशून्यत्वाद्वाऽद्वितीयः । अन्यथा सलिलादिविरोधः स्यात् ।। २१४ ।।

**(सदेव सोम्य इति श्रुत्यर्थः)**

'सदेव सोम्येदमग्र आसीत्' (छां.उ.६.२.१) इति श्रुतिं सङ्गृह्णाति - **सदेवेति** ।

**सदेवासीदिदं सृष्टेः सोम्याग्रे कारणं परम् ।**
**विकृतं किञ्चिदासीन्न जीवजडादिकं तदा ।। २१५ ।।**

अग्रे सृष्टेः प्राक् इदमेव ब्रह्मैव सत्स्वभावमजहदासीत् । विकृतं पराधीनविशेषावाप्तियोग्यं जडादिकं तत्तथा नासीदित्यर्थः ।। २१५ ।।

तदेव स्पष्टयति - **बहिरिति** ।

**बहिर्लीलां विहायैव श्रीहरिनिष्ठया स्थिताः ।**
**मुक्ता विष्णूदरे सर्वे रमन्ते सावकाशतः ।। २१६ ।।**

प्रकृत्याद्यभिमानत्यागस्तदानीं श्रियः । मुक्तानां बहिः क्रीडादित्यागोऽन्तरे च सावकाशतया विहारः ।। २१६ ।।

**बद्धजीवजडानां हि प्रलीनत्वं तदा हरौ ।**
**स्वरूपतः स्वभावेन हानिशून्यो हरिस्तदा ।। २१७ ।।**

'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' । इति ।।
वैष्णवोक्तेः ।। २१७ ।।

**आसीदन्यस्य लीनत्वं किञ्चिदंशात्तदा भवेत् ।**
**रूपेणैव निषेधे तु स्याच्छ्रुत्यन्तरवैशसम् ।। २१८ ।।**

परेशान्यस्य तदानीं किञ्चिदंशेन लीनत्वं स्यादेव, न तु तस्य ।। २१८ ।।

"तम आसीत्तमसा गूढमग्रेऽप्रकेतम्। अस्मान्मायी सृजते विश्वमेतत्" (ऋग्वेदे, ८.७.१७) इति श्रुतिमाह - **आसीदिति** ।

**आसीत्तमस्तदाच्छन्नो जीवो विश्वमदस्ततः ।**
**सृज्यते मायिनेत्थं हि विकारस्यैव वर्जनम् ।। २१९ ।।**

ततस्तमसो मायिनेशेन ।। २१९ ।।

**(एकमेवाद्वितीयमिति श्रुत्यर्थः)**

'एकमेवाद्वितीयम्' (छां.उ.६.२.१) इति श्रुतिं व्याख्याति - **एकमिति**।

**एकं मुख्यत्वतो ब्रह्माद्वितीयं समशून्यतः ।**
**सहायाभावतो वा स्यान्न तु द्वितीयवर्जनात् ।। २२० ।।**

'एके मुख्यान्यकेवलाः' इति कोशात् ।। २२० ।।

**प्रधानान्यासहायादौ सङ्ख्याप्रथमयोः समे ।**
**पठ्यते शाब्दिकैरेकशब्दोऽनेकार्थकः स्फुटम् ।। २२१ ।।**

'एको गोत्र' इत्यत्रैकशब्दोऽयमन्यप्रधानासहायसङ्ख्याप्रथमसमानवाचीति कैयटोक्तेः । सम्भवति ब्रह्मणो जीवादितोऽन्यत्वप्राधान्यादीनि । सृष्ट्यादौ सहायानपेक्षत्वम् । कुसमयप्राप्तनिर्गुणत्वनिषेधायैकत्वसङ्ख्याविधिः । नानारूपेषु निर्दोषत्वादिना साम्यम् ।। २२१ ।।

**असिद्वितीयको वीरो ह्यनुससार पाण्डवम् ।**
**सङ्कर्षणद्वितीयस्य बलं कृष्णस्य वर्द्धताम् ।। २२२ ।।**

असिर्द्वितीयः सहायो यस्य । सङ्कर्षणो द्वितीयः सहायो यस्य ।। २२२ ।।

**इति द्वितीयशब्दस्य सहायशक्तता स्फुटम् ।**
**महाभाष्यकृतोक्ताऽतस्तदा सहायवर्जनम् ।। २२३ ।।**

तदा सृष्ट्यादिसमये हरेः सहायवर्जनमेवोक्तम् ।। २२३ ।।

नन्वीशस्य सदैवासहायत्वादग्र इति व्यर्थम् अत आह - **असहाय-त्वमिति** ।

**असहायत्वमीशस्य यद्यपि सर्वदाऽस्ति नः ।**
**अन्यस्यालब्धशक्तित्वात्स्फुटीभवति तत्तदा ।। २२४ ।।**

इदानीं जीवानां स्वातन्त्र्यभ्रमात्तदानीं तदभावाद्धरेः स्वातन्त्र्यं स्फुटी-भवतीत्यर्थः ।। २२४ ।।

तदेवाह - **जीवानाम् इति** ।

**जीवानां स्याज्जडानां चेदानीं स्वातन्त्र्यविभ्रमः ।**
**तेषां शक्तिप्रदत्वेन तत्स्वातन्त्र्यं तदा स्फुटम् ।। २२५ ।।**

**अवतारादिना प्राप्तो यो भेदो ब्रह्मणः क्वचित् ।**
**वार्य एवशब्देनासौ न तु जीवेशयोर्भिदा ।। २२६ ।।**

जीवेशभेदो न वार्य इत्यर्थः । अन्यथा "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेनात्मना जीवेनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतमेकैकामकरोत्" (छां.उ.६.३.२) इत्यादिद्वैतबोधकवाक्यविरोधः स्यात् । तिस्रो देवताः पृथिव्यप्तेजांसि । जीवयतीति जीवः सङ्कर्षणस्तेन रूपेण ।। २२६ ।।

### (नासदासीत् नोसदासीत् इति श्रुत्यर्थवर्णनम्)

"नासदासीन्नो सदासीत्तम आसीत्" (ऋग्वेदे, १०.१२९.१) इत्यादि-श्रुतिं व्याख्याति - **नो सदिति** ।

**नो सदासीदसन्न चेति सृष्टितः पुरोभयम् ।**
**निषेधन्ती हि भूतानामभावं वदति स्फुटम् ।। २२७ ।।**

**अभावेनैव भिन्नेन स्यादद्वैतविरोधिता ।**
**कालपराग्रशब्देन विरोधो दुस्तरो भवेत् ।। २२८ ।।**

"यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सद्वायुरन्तरिक्षं चासत्" (तत्त्वोद्योताद् उद्धृता, माध्यन्दिनश्रुतिः) इति श्रुत्यनुसारात्सदसच्छब्दौ पञ्चभूतपरौ । एतेन सदसतोर्निषेधात्तदानीं स्थितस्य सदसद्भिन्नत्वरूपमनिर्वाच्यत्वं सिद्धमिति निरस्तम् । 'आनीदवातम्' इत्यनेन ब्रह्मणोऽपि तदानीं स्थित्युक्तेरनिर्वाच्यत्वापत्तेः । "आत्मा वा इदमेक एवाऽग्र आसीन्नाऽन्यत्किञ्चन मिषत्" (बृ.उ.२.३.११) इति श्रुत्यन्तरे जगन्मिषत्वेन विकसितत्वेनैव हिं निषिद्धम् ।। २२७ ।। २२८ ।।

ननु द्वितीयाभावो ब्रह्मस्वरूप एवेत्यत आह - **सापेक्षस्येति** ।

**सापेक्षस्य निषेधस्य नानपेक्षचिदात्मता ।**
**चितस्तव सदा ज्ञानाच्छास्त्रारम्भो वृथा भवेत् ।। २२९ ।।**

अभावः सप्रतियोगिको भ्रमकालानिश्चितश्च । ब्रह्म निष्प्रतियोगिकं भ्रमकाले निश्चितं च । कथं तयोरैक्यम् । अज्ञानाद्यधिष्ठानतया ब्रह्मणस्तव मते सदाभानाच्छास्त्रारम्भवैयर्थ्यम् ।। २२९ ।।

**(नेह नानेति श्रुत्यर्थः)**

'नेह नानाऽस्ति किञ्चन' (बृ.उ.४.४.१४) इति श्रुतिं व्याख्याति - **अवतारेति** ।

**अवतारादिभेदेनेहेति निषेधति श्रुतिः ।**
**अन्तर्यामितया प्राप्तं लोकादितोऽपि वा हरेः ।। २३० ।।**

नानेत्यत्र भावप्रधाननिर्देशः । अवतारादिना प्रसक्तो ब्रह्मप्रतियोगिको भेदो ब्रह्मणि वार्यत इत्यर्थः ।। २३० ।।

**नानाशब्दो विनार्थे वाऽविनाभूतं जगद्धरेः ।**
**अविनाभूतता व्याप्तिः सा नियम्यत्वतो हरेः ।। २३१ ।।**

यत्र तादात्म्येन जगत्तत्र नियामकत्वेन हरिर्यत्र हरौ नियामकत्वेन स्वाभावस्तत्र तादात्म्येन जगदभाव इति हि व्याप्तिः । एतद्वाक्यस्य जगन्मिथ्यात्वपरत्वे बृहदारण्यके "यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठित" (बृ.उ.६.४.१७) इति पूर्वेण "एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" (छां.उ. ८.४.१) इत्युत्तरेण काठके च "ईशानं भूतभव्यस्य" (काठक.उ.२.१.५) इति पूर्वेण "ईशानो भूतभव्यस्य" (काठक.उ.२.१.१२) इत्युत्तरेण च विरोधः स्यात् ।। २३१ ।।

**पूर्वोत्तरानुसारेणान्यस्येशाधीनतोदिता ।**
**भिन्नाभावोऽपि भिन्नः स्यात् व्याहतं तन्निषेधनम् ।। २३२ ।।**

अस्य जगतो भिन्नस्य जगतोऽभावोऽपि भिन्न इति भिन्नमात्रनिषेधो व्याहत इत्यर्थः ।। २३२ ।।

**(यत्र त्वस्येति श्रुत्यर्थवर्णनम्)**

"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" (बृ.उ.४.५.१५) इत्यादिश्रुतिर्मोक्षप्रस्तावे व्याख्यातापि प्रसङ्गात्पुनर्व्याख्यायते - **यत्रेति** ।

**यत्र विमुक्तिकालेऽस्य चाऽऽत्मैवाऽभूद् विजानतः ।**
**तदा कं केन पश्येत्स इत्यदर्शनमेव हि ।। २३३ ।।**

मुक्तौ द्वितीयाऽभावे यदनिष्टम् अदर्शनं रूपादेरीश्वरस्य च ज्ञानस्याऽभावस्तदापाद्यते -

**आपाद्यते चिदेकत्वे तदनिष्टमतीव हि ।**
**रूपाद्यज्ञानतोऽन्यत्र लोके दुःखतरं भवेत् ।। २३४ ।।**

'निमग्नस्य परेऽज्ञाने किं न दुःखतरं भवेत्' । (मोक्षधर्मे)

इति भारतोक्तेः । अन्यथा "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" इति वाक्यशेषविरोधः स्यात् । यः सर्वं क्षत्रब्रह्मादिकमात्मनोऽन्यत्राऽन्याधारकं निराधारं वा वेद तत्परादात् खण्डयेदित्यर्थः। 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दान् शक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत' इति च विरुद्ध्येत । यथा दण्डादिना ताड्यमानस्य भेर्यादेः दुन्दुभिशब्दसामान्यान्निकृष्टान् बाह्यान् तारमन्द्ररूपान् शब्दान् ग्रहीतुं न शक्नोति । हन्यमानस्य दुन्दुभेस्तदाघातस्य वा ग्रहणेन ग्रहणे सति तदीयविशेषा ग्रहीतुं शक्यन्त इत्यर्थः । न हि दुन्दुभिशब्दस्तत्राध्यस्तः किन्तु तदधीनः ।। २३४ ।।

**(यत् द्वैतं न पश्यतीति श्रुत्यर्थवर्णनम्)**

"यत् द्वैतं न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत्पश्येत्" (बृ.उ.४.३.२३) इति श्रुतिं व्याख्याति - **यदिति** ।

**यद् द्वैतं नैव पश्येन्न द्वैतं तदस्ति किञ्चन ।**
**द्रष्टुर्दृष्टेर्न लोपो हि ब्रह्मभेदो निषिद्ध्यते ।। २३५ ।।**

यत् तु स्वावतारगुणादिकं द्वैतं द्वितीयत्वेन न पश्यति तत्ततो भिन्नं नाऽस्ति । हि यतः पश्यन् सर्वज्ञ एव सन्न पश्यति । न हि द्रष्टुः सर्वज्ञस्य दृष्टेर्विपरिलोपो नाशो विद्यतेऽविनाशित्वात् । यज्जीवजडादिकं द्वितीयं विभक्तं पश्यति तत् ततोऽन्यदित्यर्थः । अन्यथा पूर्वत्र 'यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्त्य श्रान्तः संहत्य पक्षौ

सँल्लयायैव ध्रियते एवमेवायं पुरुष' इति, 'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् एवमेवायं पुरुष' (बृ.उ.६.३.१९) इति भिन्नसत्यनीडश्येनस्त्रीपुरुषतोक्तिः 'प्राज्ञेनात्मना संपरिष्वक्त' (बृ.उ. ६.३.१५) इति जीवेशभेदोक्तिश्च विरुद्ध्येत ।। २३५ ।।

**(वाचारम्भणमिति श्रुत्यर्थः)**

"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छां.उ.६.१.४) इति श्रुतिं व्याख्याति - **वाचारम्भणेति** ।

**वाचारम्भणशब्देन भाषाशब्दः प्रकीर्त्यते ।**
**यो व्याकरणानिष्पाद्यो वाचैव जन्यते हि सः ।। २३६ ।।**

पदार्थविपर्यास इति शब्दः । यथा "न वेति विभाषा" इत्यत्रेतिशब्दः शब्दप्रकरणे पठितः शब्दपरत्वं प्रच्याव्यार्थपरत्वं व्यवस्थापयति तथा मृत्तिकेतीत्यत्रेतिशब्दोऽर्थप्रकरणत्वाच्छब्दपरत्वं व्यवस्थापयति । अन्यथाऽर्थप्रकरणादेवार्थपरत्वे सिद्धे हीति शब्दो व्यर्थः । वाचया व्याकरणनिरपेक्षवागिन्द्रियेणारभ्यते संस्कृतापभ्रंशरूपो भाषाशब्दो देशादिभेदेन विकृतः ।। २३६ ।।

**देशादिभेदतो नानाविकृतो मृत्तिकेति च ।**
**संस्कृतमेकरूपं न विकारि तेन सिद्ध्यति ।। २३७ ।।**

गावी गोणीत्यादिना देशादिभेदेन विकृतः । मृत्तिकेत्यादि संस्कृतरूपनामधेयम् एकरूपं देशादिभेदेनाविकारि ।। २३७ ।।

**व्यवहारस्ततो यः स्यात्सोऽधिकश्चाऽस्ति संस्कृतात् ।**
**तथान्योपासनाद्यद्यत्फलं तदधिकं हरेः ।। २३८ ।।**

नानाभाषाशब्दैर्यावान् व्यवहारः सिद्ध्यति तावानधिकश्च संस्कृतेनै-

केनैव सिद्ध्यति यथा तथा देवान्तरज्ञानाद्यत्फलं तत्तदधिकं च हरेर्ज्ञानाद्भवतीत्यत्र वाचारम्भणमिति दृष्टान्तः । सदृशज्ञानात्सदृशस्य ज्ञानं भवतीत्यत्र मृत्पिण्डादयो दृष्टान्ताः ।। २३८ ।।

**ज्ञेयान्तरधियो यद्यत्फलं तत्सर्वमाप्नुयात् ।**
**ब्रह्मज्ञानादिति प्राहैकविज्ञानश्रुतिः परम् ।। २३९ ।।**

एकस्य हरेर्ज्ञानेन सर्वेषां ज्ञेयानां ज्ञानं तत्ज्ञानफलं भवति ।। २३९ ।।

**(वाचारम्भणश्रुतेरद्वैत्युक्तार्थेऽनुपपत्तिप्रदर्शनम्)**

पराभिमतवाक्यार्थानुपपत्तिमाह - **विवर्त्तेति** ।

**विवर्त्तवादिनः सर्वे दृष्टान्ता हि विरोधिनः ।**
**न मृत्पिण्डविवर्त्तोऽस्ति घटो निकर्त्तनस्य वा ।। २४० ।।**
**यथा शुक्तित्वबोधेन रूप्यं ज्ञातं भवेन्न हि ।**
**न ज्ञायेत घटस्तेऽथ मृत्पिण्डज्ञानतस्तथा ।। २४१ ।।**

यथा सोम्यैकमृत्पिण्डविज्ञानेन सर्वं मृन्मयं विज्ञातं भवति एकनखनिकर्तनविज्ञानेन सर्वमयस्मयं विज्ञातं भवतीति दृष्टान्ता असङ्गताः । न हि घटादिर्मृत्पिण्डादिविवर्त्तः । मृत्पिण्डविज्ञानेन शुक्तिज्ञानेन रूप्यस्येव घटादेर्निवृत्त्यापत्तेः । न चैकविज्ञानेन सर्वविज्ञानवाक्यं परस्य युक्तम् । शुक्तिज्ञानेन रूप्यस्येव ब्रह्मज्ञानेन सर्वनाशस्यैवोचितत्वात् ।। २४० ।। २४१ ।।

**(इदं सर्वं यदयमात्मा इति श्रुत्यर्थः)**

'इदं सर्वं यदयमात्मा' (बृ.उ.२.४.६) इत्यादि श्रुतिं व्याख्याति - **इदमिति** ।

**इदं सर्वं हि यत्रास्ते विश्वं स्थावरजङ्गमम् ।**
**सोऽयमात्माऽखिलाधारोऽनन्तगुणालयो हरिः ।। २४२ ।।**

इदं सर्वं यत् यस्मिन् यदाधारकं सोऽयमात्मा परेशः ।। २४२ ।।

परयोजनयापि नाद्वैतसिद्धिः । चिज्जडयोरभेदस्य विरुद्धत्वात् । न च योऽयं स्थाणुतया ज्ञातः स न स्थाणुः किन्तु ब्रह्मैवेति बाधायां सामानाधिकरण्योपपत्तिरिति वाच्यम् । ज्ञातनञादिपदाध्याहारेणास्यावैदिकवाक्यान्तरत्वात् । अतः सर्वव्यापकत्वादिना सर्वाभेदोक्तिरित्याशयेनाह - **सर्वेति** ।

**सर्वव्याप्तिनिमित्तत्वाधारत्वकर्तृतादिभिः ।**
**निमित्तैरुच्यतेऽभेदो विश्वपरेशयोः क्वचित् ।। २४३ ।।**

'सर्वं समाप्नोषि ततोऽसि सर्वः' (गीता.११.४०)

इति स्मृतेः सर्वव्यापकत्वात् 'ब्राह्मणो वै सर्वा देवताः' इतिवत् सर्वाधारत्वात्सर्वमित्युक्तिः ।। २४३ ।।

**(यस्मात्परं नापरमस्तीति श्रुतिव्याख्यानम्)**

'यस्मात्परं नापरमस्ति' (महा.ना.उ.८.१३) इति श्रुतिं व्याख्याति - **यस्मादिति** ।

**यस्माद्धरेः परं नास्त्यपरं हि जीवजडादिकम् ।**
**ईश्वराधीनमस्तीदं पूर्णं तेन जगत्सदा ।। २४४ ।।**

परं श्रेष्ठं नापरं त्वस्तीत्यर्थः । "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् । पूर्णं ततो यदुत्तरतरं तदु नात्येति कश्चन" (महाना.उ.८.१३) इति वाक्यशेषविरोधः स्यात् । द्वितीयस्याभावे किं केन पूर्णं कस्माच्चोत्तरतरं स्यात् ।। २४४ ।।

**(प्राणा वै सत्यमिति श्रुत्यर्थकथनम्)**

ननु 'प्राणा वै सत्यं तेषामेष सत्यम्' (बृ.उ.२.१.२०) इति श्रुत्या प्राणापेक्षया हरेः सत्यत्वोक्त्या प्राणोपलक्षितविश्वस्य मिथ्यात्वं स्यादित्याशङ्क्य श्रुतिं व्याख्याति - **प्राणेति** ।

**प्राणोपलक्षितं विश्वं सत्यं विष्णुस्ततोऽधिकः ।**
**स्वतन्त्रत्वात्परः सत्यो राजराजो यथोदितः ।। २४५ ।।**

ब्रह्मजगतोरबाध्यत्वाविशेषेऽपि स्वातन्त्र्यपारतन्त्र्यादिनोत्कर्षापकर्षभावः ।। २४५ ।।

वस्तुतस्त्वत्रोत्कर्षादिबोधकपदं नास्त्येव । तेषामिति सम्बन्धमात्रस्यैव बोधनात् । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२ः१.१) इत्यत्र सत्यत्वं ब्रह्मलक्षणमुक्तम् । तच्चान्यस्य सत्यत्वेऽतिव्याप्तं स्यादित्यन्यस्य मिथ्यात्वमित्यत आह - **बद्धेति** ।

**बद्धमुक्तनियन्तारं सत्यशब्दो हरिं वदेत् ।**
**व्याख्या छान्दोग्य एतस्य नातो विश्वं मृषा भवेत् ।। २४६ ।।**

"तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम्" (छां.उ.८.३.४) इति "तान्येतानि त्रीण्याक्षराणि सत् ति यमिति" "तद्यत्सत्तदमृतम् । अथ यत् ति तन्मर्त्यम् । अथ यद्यत् तेनोभे यच्छति" इति छान्दोग्ये मुक्तामुक्तनियन्तृत्वं सत्यशब्दार्थ उक्तः ।। २४६ ।।

**(इन्द्रो मायाभिः इति श्रुत्यर्थः)**

ननु 'इन्द्रो मायाभिः पुरुरूप ईयत' (ऋ.सं.४.७.३३) इति श्रुत्या ब्रह्मणो बहुभवनोक्त्या विश्वस्य मिथ्यात्वं तत्राह - **मायेति** ।

**माया विचित्रशक्तिः स्यादिन्द्रस्तयेयते पुरुः ।**
**अवतारादिरूपेणान्तर्याम्यादितया तथा ।। २४७ ।।**

**।। इति श्रीवनमालिमिश्रविरचिते श्रुतिसिद्धान्तसङ्ग्रहे षष्ठोऽध्यायः ।।**

'मायां तु प्रकृतिं विद्यान्मायिनं च महेश्वरम् । (श्वे.उ.४.१०)

इति श्रुतेर्माया विचित्रशक्तिस्तयैकोऽप्यवतारान्तर्यामित्वादिना बहुधा प्रतीयते हरिः ।। २४७ ।।

*।। इति श्रुतिसिद्धान्तसङ्ग्रहे वनमालिमिश्रविरचिते षष्ठोऽध्यायः ।।*

## ।। अथ सप्तमोऽध्यायः ।।

ननु काश्चन श्रुतयो जीवेशयोरभेदं भेदं चापराः विश्वमिथ्यात्वं काश्चन तत्सत्यत्वं चापराः ब्रह्मणो निर्गुणत्वं सगुणत्वं चेत्यादिश्रुतीनां विप्रतिपन्नत्वात्कथं तत्त्वनिर्णय इत्याशयेन पृच्छति - **श्रुतीनामिति** ।

**शिष्य उवाच**

**श्रुतीनां गहनत्वान्मे संशयस्तत्र वर्त्तते ।**
**निश्चिनुयां कथं तत्त्वं ताभिरुक्तं त्वया प्रभो ।। १ ।।**

श्रुतिभिः प्रागुक्तं यत्त्वयाऽऽत्मादितत्त्वं तत्कथं निश्चेयम् ।। १ ।।

**गुरुरुवाच**

**(प्रत्यक्षाबाधित उपक्रमाद्यविरुद्धश्च श्रुत्यर्थः नापातप्रतीतः)**

**आपातादन्य एवार्थो विचारादन्य एव च ।**
**उपक्रमादिलिङ्गैश्च तत्त्वस्य निर्णयो भवेत् ।। २ ।।**

**प्रत्यक्षाद्यविरुद्धोऽर्थो गृह्यते शिष्टपुङ्गवैः ।**
**तद्विरुद्धं हि मिथ्यात्वं जगतोऽतो न गृह्यताम् ।। ३ ।।**

'सन् घट' इति प्रत्यक्षविरुद्धं विश्वमिथ्यात्वमतो न श्रुतेस्तत्र तात्पर्यम् । किं मिथ्यात्वं सत्यं मिथ्या वा? आद्ये न सर्वमिथ्यात्वसिद्धिः । द्वितीये विश्वस्य सत्यत्वं स्यात् । 'नाहमीश्वर' इति प्रत्यक्षेण विरोधाज्जीवेशाभेदश्रुतिरपि लक्षणया तत्सादृश्यादिपरा । किञ्च, प्रपञ्चाभावादिकं चिन्मात्रं वा श्रुत्या बोध्यते । आद्ये अभावादिकं सत्यं मिथ्या वा । आद्ये तेनैवाद्वैतहानिः । द्वितीये प्रपञ्चस्य सत्यत्वं स्यात् । नान्त्यः, यथा हि भूतलज्ञानं घटतदभावज्ञानाविरोधि तथा चिन्मात्रज्ञानं द्वैताविरोधि । वस्तुतस्तूपक्रमादिना विचारे क्रियमाणे कापि श्रुतिर्न विश्वमिथ्यात्वादि-

परा । काश्चन श्रुतयो व्याख्याताः अवशिष्टा व्याख्यायन्ते ।। २ ।। ३ ।।

**(नेति नेति श्रुतिर्न विश्वमिथ्यात्वसाधिका)**

ननु 'अथात आदेशो नेति नेति' इति श्रुतिर्विश्वमिथ्यात्वपरेत्यत आह - **नेति** ।

**नेति नेति श्रुतिर्ब्रूते वैलक्षण्यं परेशितुः ।**
**जडाज्जीवाच्च मिथ्यात्वं नैव कस्यापि भाषते ।। ४ ।।**

'तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तं सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदे'ति पूर्वं पुरुषस्येशस्य विचित्ररूपत्वं तज्ज्ञानस्य श्रीप्राप्तिरूपं फलं चोक्त्वा "अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' (बृ.उ.४.३.६) इति जडजीववैलक्षण्यमुक्त्वा ततः परमुत्कृष्टमन्यत् निषिद्ध्य प्राणोपलक्षितविश्वसत्तायास्तदधीनत्वमेवोक्तम् ।। ४ ।।

**(आत्मा वारे द्रष्टव्य इति श्रुतिः न जीवाभेदपरा)**

ननु "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते हृदं सर्वं विदितम्" (बृ.उ.६.५.६) इत्युपक्रमानुरोधेन जीवस्यैव द्रष्टव्यत्वादिकम् । तच्चेशा-भेदे सत्येव तस्योपपद्यते । तयोरभेदस्तु द्वैतमिथ्यात्वे सत्येव स्यादित्यत आह - **कामायेति** ।

**कामाय ह्यात्मनः सर्वं प्रियं स्यादित्युपक्रमः ।**
**आत्मत्वेनैव तद्विद्धि स्यादुपसंहृतिश्चितः ।। ५ ।।**

उपक्रमोपसंहारावात्मत्वेनैव । न तु जीवत्वेनेशत्वेन च । यथा सिद्धपाकविषयकपाकत्वप्रकारकज्ञानादसिद्धपाकविषयिकेच्छा जायते । सिद्धे इच्छाविरहात् । तथाऽऽत्मत्वेन जीवस्योपक्रमेऽपि दर्शनश्रवणमननिदिध्यासनानुपपत्त्योपसंहार ईश्वरविषयक एव । यथा वा चातुर्मास्ये पर्वद्वये द्वयोः प्रणयन्तीति प्रणयनविधायकस्य वाक्यस्य सार्थक्यायाऽतिदेशप्राप्तगार्हपत्यापादानकाहवनीयावधिकप्रणयनातिरिक्ताहवनीयापा दानकोत्तरवेद्यवधिकापूर्वप्रणयनविषयकत्वं कल्प्यते तथा दर्शनादिविध्यन्यथानुपपत्त्योपसंहारस्येशविषयकत्वं कल्प्यते ।

न च जीवेशाभेदेनोपसंहारोपपत्तिः । प्रत्यक्षसिद्धजीवाभिन्नेशस्यापि प्रत्यक्षसिद्धत्वेन दर्शनादिविधिवैयर्थ्यात् । अज्ञानाद्यधिष्ठानतया सदा प्रत्यक्षाच्चिन्मात्रादतिरिक्तविशेषमनङ्गीकुर्वतो दर्शनादिविधिवैयर्थ्यमेव । न च प्रत्यक्षेण विशिष्टं गृह्यते, न शुद्धं, विशिष्टभाने विशेष्यभानावश्यकत्वात् । तद्विज्ञानेन सर्वेषां देवानां विज्ञानेन फलं भवति इत्यर्थः । तद्विज्ञाने सर्वविज्ञानमनुपपन्नमेव । अधिष्ठानतत्त्वज्ञानेन ह्यध्यस्तस्य नाश एव न ज्ञानम् । न हि शुक्तिज्ञानेन रूप्यं ज्ञातमपि तु नष्टम् । अतो जीवादत्यन्तविलक्षणः सदनन्तगुणालयो हरिरेव विहितदर्शनादिविषयः । "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" (बृ.उ.४.५.७) इत्युत्तरश्रुतिः सर्वस्यात्माधारकत्वं बोधयन्ती सर्वस्य सत्यत्वं बोधयति । "इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदं सर्वं यदयमात्मा" (बृ.उ.२.४.६) इत्यपि श्रुतिरपीदं सर्वं यद्यस्मिन् सोऽयमात्मा परमात्मेत्यर्थपरा सत्याधाराधेयभावं बोधयन्ती भेदपरा ।। ५ ।।

### (उक्तश्रुतेर्मिथ्यात्वे दृष्टान्तानुपपत्तिप्रतिपादनम्)

"स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय

दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः स यथा वीणायै वाद्य-मानायै न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गहीतः । स यथाऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरे अस्य महतो भूतस्य निश्वसितमेतद्यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि" इति सङ्गृह्णाति - **दुन्दुभीति** ।

**दुन्दुभिशब्दयोः सत्त्वं वीणातच्छब्दयोर्यथा ।**
**धूमाग्न्योश्चैव सत्यमीश्वरजगतोस्तथा ।। ६ ।।**

परस्परभिन्नानां समसत्ताकानां दुन्दुभितच्छब्दानां वीणातच्छब्दाग्निधूमादीनां दृष्टान्तत्वं द्वैतसत्यत्व एवोपपद्यते । न हि दुन्दुभ्यादौ तच्छब्दादिरध्यस्तः । किन्तु तदधीनः । तथा ब्रह्मक्षत्रादीनां सर्वेषामन्याधारकत्वं निषेधन्ती ब्रह्माधारकत्वं चाऽऽक्षिपन्ती दुन्दुभ्यादिदृष्टान्तेन ब्रह्मसमसत्ताकत्वं बोधयति । या दण्डादिना ताड्यमानस्य भेर्यादेस्तारमन्द्ररूपान् बाह्यान् ग्रहीतुं न शक्नोति दुन्दुभेस्तु ग्रहणेन आहननमाघातः तद्विशिष्टस्य वा दुन्दुभेर्ग्रहणे सति शब्दसामान्यविशिष्टदुन्दुभिग्रहणे सति विशेषा गृह्यन्ते । एवं वीणादावपीत्यर्थः । यथा सामान्यं विना विशेषो नावतिष्ठते तथा ब्रह्म विना जगन्नास्तीत्येवं प्रतीयते । न तु ब्रह्मणि तदध्यस्तमिति । दृष्टान्तानानुगुण्यात् । सामान्ये विशेषस्यानध्यासात् । ततो जगदुत्पत्तिविषये आर्द्रेन्धनाग्निधूमदृष्टान्तवाक्येऽपि लीलयाऽनायासेन निश्वसितवज्जगत्सर्जनमित्येवं प्रतीयते न तु तत्राध्यासः ।। ६ ।।

**(जीवपरयोर्भेदे स वा अयमात्मेति स्पष्टश्रुत्युदाहरणम्)**

"स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवाऽस्मिन्नात्मनि

सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानः समर्पिताः" (बृ.उ.४.५.१५) इति श्रुतिं सङ्गृह्णाति - **चिज्जडानामिति** ।

**चिज्जडानां चितां भेदं स्पष्टं बोधयति श्रुतिः ।**
**तथा जीवबहुत्वं च स वा इत्यादिका स्फुटम् ।। ७ ।।**

अयमात्मा सर्वेषां भूतानां प्राणिनामधिपतिः पालको राजा शिक्षकश्च रथनाभावित्यादि सर्वाणिभूतानीत्यन्तेन जडानां च सर्वेषां ब्रह्माधारकत्वमुक्तम् । सर्व एत आत्मानः समर्पिता इत्यन्तेन मुक्तानां तदाधारकत्वमुच्यते । अन्यथा सर्वाणिभूतानीत्यन्तेन पुनरुक्तिः स्यात् ।। ७ ।।

**(रूपं रूपं प्रतिरूपो बभूव इति श्रुत्यर्थः)**

"रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय इन्द्रो मायाभिः पुरुरूप ईयत" (बृ.उ.४.५.१९) इति श्रुतिं सङ्गृह्णाति - **जीवमिति** ।

**जीवं जीवं प्रतीशानोऽन्तर्यामी बहुधाऽभवत् ।**
**माया विचित्रशक्तिः स्यादन्तर्यामितया बहुः ।। ८ ।।**

रूपं रूपं जीवादिकं प्रत्यन्तर्यामितया बभूव । मायाभिर्विचित्रशक्तिभिरन्तर्यामितया मत्स्याद्यवतारादिना बहुरूपः प्रतीयते इत्यर्थः ।। ८ ।।

ननु विश्वं दृष्टिसृष्टिरेव "अस्मादात्मनः सर्वे प्राणाः" (बृ.उ.४.१.२०) इत्यादिश्रुतिस्तत्र मानमिति मन्दाशङ्कामपाकर्त्तुं श्रुतिं व्याख्याति - **सर्व इति** ।

**सर्वे लोकास्तथा प्राणा देवा भूतानि सर्वशः ।**
**अस्मादात्मन ईशानाज्जायन्ते सृष्टिकालतः ।। ९ ।।**

ईशकर्तृकैवेयं सृष्टिरित्यर्थः ।। ९ ।।

**यत्रैषोऽभूत्प्रसुप्तो वा एषोऽन्तर्हृदये विभुः ।**
**तस्मिञ्छेत इतीत्थं हि प्रक्रान्तो जगदीश्वरः ।। १० ।।**

इदंपदेनेश्वरं परामर्शयितुं "यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" (बृ.उ.४.१.१७) इति सुप्ताधारेशप्रस्तावकं वाक्यमुदाहरति ।।१०।।

**जीवानां दर्शनं नास्ति सर्वलोकादिगोचरः ।**
**जीवात्सुप्तोत्थितात्सृष्टिर्युज्यते न कथञ्चन ।। ११ ।।**

"यथोर्णनाभिस्तन्तुनोच्चरेद् यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति । तस्योपनिषत्सत्यस्य सत्यमिति । प्राणा वै सत्यम् । तेषामेष सत्यम्" (बृ.उ.४.१.२०) इति श्रुत्योर्णनाभितन्त्वग्निविष्फुलिङ्गदृष्टान्तेन सुप्ताधारतया प्रस्तुतादिदंपदेन परामृष्टादीशाद् देहद्वारा जीवानां च परमार्थसतां सृष्टिकाले सृष्टिरुच्यत इत्यर्थः । "अथ यदा सुषुप्तो भवति तदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" (बृ.उ.४.१.१९) इति सुप्तावज्ञातनाडीसत्त्वं वदन्त्या श्रुत्या दृष्टिसृष्टिमतभङ्गात् ।। ११ ।।

**संस्काराद्दृष्टदेहानां सुप्तौ ज्ञानस्य वर्जनात् ।**
**उत्थितिर्न ततोऽतः स्यान्निद्रितस्य कथञ्चन ।। १२ ।।**

ज्ञानार्थं श्रवणादौ स्वर्गार्थं यागादौ प्रवृत्तिर्न स्यात् । दृष्टिसृष्टिमते कार्यकारणनियमाभावादित्यपि बोध्यम् ।। १२ ।।

**(जीवेशावभासेन इति श्रुत्यर्थः)**

"जीवेशावाभासेन करोति मायाऽविद्या च स्वयं भवति" इति श्रुतिं

व्याख्याति -

**आभासो ह भ्रमस्तेन युतावीशासुधारिणौ ।**
**करोत्याच्छाद्य तत्त्वं सा जीवं प्रतीशजीवयोः ।। १३ ।।**

जीवं प्रतीशजीवयोस्तत्त्वमाच्छाद्य जीवाधिकरणकान्यथाज्ञानविषयौ तौ सम्पादयतीत्यर्थः ।। १३ ।।

अन्यथाज्ञानमेवाह - **जीव इति** ।

**जीवे वपुरभिन्नत्वं तत्तुल्यत्वं परेशितुः ।**
**भासयन्ती मुधा मायाऽविद्याशब्दोदिता स्वयम् ।। १४ ।।**

अहं गौरः स्थूल इत्यादिना जीवस्य देहाभेदभ्रमजनिका,
'अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम्
परं भावमजानन्तो मम भूतमहेश्वरम् ।। (भ.गी.९.११)
नाऽहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ।। (भ.गी.७.२५)
इत्युक्तं जीवं प्रतीशस्यान्यथाज्ञानं जनयतीति, जीवं प्रतीशतत्त्वमाच्छादयन्ती मायापदेन, जीवतत्त्वमाच्छादयन्ती चाविद्यापदेन व्यवह्रियते इत्यर्थः ।। १४ ।।

**कृतिगोचरतेशस्य जीवस्यापि ह बाधिता ।**
**जगतोऽनीश्वरत्वं स्यात् जीवो नष्टो भवेदथ ।। १५ ।।**

जन्यस्येश्वरत्वे मानाभावः । सर्वजनकेश्वरबोधकश्रुतिविरोधः । जन्यस्य जीवस्य नाशावश्यकत्वान्निर्मोक्षप्रसङ्गश्च स्यात् ।। १५ ।।

ननु जीवेशयोर्भेदं मायाकृतमाहेयं श्रुतिरिति व्याख्यामाशङ्क्य निराकरोति - **भेदमिति** ।

**भेदं मायाकृतं ब्रूते जीवेशयोर्दुराग्रहात् ।**
**अनादित्वं च षण्णां स उपेक्ष्यो व्याहतार्थकः ।। १६ ।।**

'जीवेश्वरौ विशुद्धा चिद्विभागस्त्वनयोर्द्वयोः ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ।। (वार्तिके, २९.५०५)

इति भेदस्यानादित्वं मायाकृतत्वं च ब्रुवन्नुन्मत्त इवोपेक्ष्यः ।। १६ ।।

**(नेशस्य स्वातन्त्र्यं मायिकम् जीवस्य पारतन्त्र्यमपि नाविद्यकम्)**

ईशस्य स्वातन्त्र्यं मायाकृतं जीवस्य पारतन्त्र्यं चाविद्याकृतमित्येतच्छ्रुत्यर्थं परोक्तं दूषयितुमुपक्षिपति - **स्वातन्त्र्यमिति** ।

**स्वातन्त्र्यं परमेशस्य मायाधीनं ब्रवीति यः ।**
**अस्वातन्त्र्यं तथा जीवेऽविद्यया कल्पितं मुधा ।। १७ ।।**

स्वातन्त्र्यं पारतन्त्र्यं चोभे मुधा मिथ्या ।। १७ ।।

दूषयति -

**सापेक्ष्यो वेदविद्वेषी मायास्वामित्वमागमैः ।**
**स्फुटमुक्तं हि चेशस्य व्याहतैवं स्वतन्त्रता ।। १८ ।।**

'मायां तु प्रकृतिं विद्यान्मायिनं च महेश्वरम्' ।

इत्यादि श्रुतिभिः -

'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' ।
'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्' । (भ.गी.९.१०)

'स ईशो यद्वशे माया' इत्यादिस्मृतिभिश्च मायास्वामित्वं हीशस्योक्तम् । निरवधिकस्वातन्त्र्यं पराधीनमित्येतद् व्याहतम् ।। १८ ।।

**अस्वातन्त्र्यं सदा जीवे सिद्धं प्रत्यक्षतः स्फुटम् ।**
**मुक्तौ तद्भगवान् ब्रूते जगद्व्यापारनिवारकः ।। १९ ।।**

'जगद्व्यापारवर्जम्' (ब्र.सू.४.४.१७) इति सूत्रकृता मुक्तौ जीवस्य जगज्जनकत्वं वारयता स्फुटमस्वातन्त्र्यमुक्तम् ।। १९ ।।

ननु जीवेशभेदो मायिक इत्येतच्छ्रुत्यर्थस्तत्राह - **भिदाया इति** ।

**भिदाया मायिकत्वे च स्यात्तद्दृष्टिः प्रभोः कथम् ।**
**मायामोहं विना युक्तं न मायिकस्य दर्शनम् ।। २० ।।**

मायामोहं विना मायिकभेदादर्शनात्स्वभिन्नजीवपालनोपदेशादौ प्रवृत्तिर्न स्यादित्यर्थः ।। २० ।।

**(न तत्र रथा इत्यादिश्रुत्यर्थः)**

"न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान् रथयोगान् पथः सृजते । न तत्राऽऽनन्दा मुदः प्रमुदो भवन्त्यथाऽऽनन्दान्मुदः प्रमुदः सृजते । न तत्र वेशान्ताः स्रवन्त्यः पुष्करिण्यो भवन्त्यथ वेशान्ताः स्रवन्तीः पुष्करिणीः सृजते । स ह कर्त्ता" (बृ.उ.६.३.१०) इति श्रुतिं व्याख्याति - **रथादीनामिति** ।

**रथादीनां चतुर्थोऽत्र सामयिकोऽभाव ईरितः ।**
**सृष्टिः पश्चाद्रथादीनामुदितेश्वरकर्तृका ।। २१ ।।**

।। २१ ।।

**(स्वाप्नार्थस्रष्टा दर्शयिता चेश्वरः)**

'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ।
शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंसः ।
प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा ।
स ईयते अमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः' ।।

इत्युत्तरवाक्यानुसारेणेश एवात्र कर्त्ता न जीव इत्याह - **योऽसुप्त इति** ।

**योऽसुप्तोऽलुप्तविज्ञानः सुप्तान् भासयतीतरान् ।**
**स एवात्र हि कर्त्तेशोऽतोऽतादृग् न देहभृत् ।। २२ ।।**

स्वप्नावस्थया शरीरं शरीराभिमानिनं जीवं प्रतिहत्याच्छाद्य स्वयमसुप्तस्तं प्रकाशयति । शुक्रं ज्योतिष्मज्जीवमादाय नाडीविशेषं विहाय हृदयस्थानमेति । हिरण्मयः प्रकाशरूपः । पुरुषोऽन्तर्यामी । एकहंसः सदैव सारासारविवेकज्ञः ।। २२ ।।

**स्वाप्निकानां रथादीनां सृष्टिं प्राह श्रुतिः स्फुटम् ।**
**भवेत्सत्त्वमतस्तेषां त्रिकालाबाधलक्षणम् ।। २३ ।।**

श्रुतिप्रामाण्यानुपपत्त्या स्वाप्निकरथादीनां पारमार्थिकसत्यत्वं स्यात् ।।२३।।

**यदा यस्य प्रतीतिः स्यात् तदाऽबाध्यत्वमात्रतः ।**
**त्रैकालिकस्य बाधस्याभावः सत्त्वं भवेद् दृढम् ।। २४ ।।**

यस्मिन् काले यत्प्रतीतं तत्कालाबाध्यत्वमात्रेण त्रैकालिको यो बाधस्तदभावरूपं सत्यत्वं सिद्ध्यतीत्यर्थः ।। २४ ।।

**(वासनारूपोपादानस्य ईश्वरेच्छारूपनिमित्तस्य च भावात् स्वाप्नार्थाः सत्याः)**

स्वाप्निकरथादीनां मृषात्वे तत्सृष्टिबोधकश्रुतेरप्रामाण्यं स्यादित्याह - **अप्रामाण्यमिति** ।

**अप्रामाण्यं श्रुतेस्तस्यास्तन्मिथ्यात्वोररीकृतौ ।**
**कर्त्ता तत्र परेशः स्यादुपादानं हि वासना ।। २५ ।।**

तत्रेशः कर्त्ता । वासनोपादानम् ।। २५ ।।

ननु जीव एव तत्र कर्त्ता किं न स्यात्तत्राह - **स्वतन्त्र इति** ।

**स्वतन्त्रस्तत्र जीवश्चेत्स्वानिष्टोत्पादनं कथम् ।**
**इष्टमेव सदा कुर्यात्स्वप्ने तर्ह्यसुभृद् भृशम् ।। २६ ।।**

स्वप्ने यदि जीवः स्वतन्त्रः कर्त्ता स्यात्तर्हि व्याघ्रादिकं कथमुत्पादयेत् प्रत्युत स्वाभीष्टानेवोत्पादयेत् ।। २६ ।।

ननु शुक्तिरूप्यादेरिव कर्त्तारं विनैव स्वाप्नानां सृष्टिः स्यात्तत्राह - **विनेति** ।

**विना कारणमुत्पत्तिर्वस्तुनो नैव युज्यते ।**
**उत्पत्तौ शुक्तिरूप्यादेर्मानं किञ्चिन्न विद्यते ।। २७ ।।**

**स्वप्नदृष्टमन्त्रादेर्न बाधो दृश्यते यतः ।**
**अतो मिथ्या न सर्वं स्याद्यत्स्वप्ने दृष्टिगोचरः ।। २८ ।।**

वस्तूत्पत्तौ कर्त्ताऽपेक्ष्यते । शुक्तिरूप्यं न वस्तु न वा तस्योत्पत्तिर्मानाभावात् । इदमेतावद्रूप्यतया ज्ञातं रूप्यमत्र नासीदित्यनुभवाच्च ।। २७ ।। २८ ।।

**(स्वप्ने बाधितस्यैव मिथ्यात्वम्)**

ननु "वैधर्म्याच्च न स्वप्नादिवत्" (ब्र.सू.२.२.२९) इति सूत्रं प्रपञ्चे स्वप्नवैलक्षण्यबोधकमनुपपन्नं भवतामुभयोरपि सत्यत्वात्तत्राह - **यस्येति** ।

**यस्य तत्रैव बाधः स्यात्तन्मिथ्यात्वमूरीकृतम् ।**
**तद्वैलक्षण्यमाहात्र सूत्रं न स्वाप्नमात्रतः ।। २९ ।।**

यस्य स्वशिरश्छेदादेः ।। २९ ।।

**(आत्मैवेदमग्र आसीदिति श्रुत्यर्थः)**

"आत्मैवेदमग्र आसीत्" (बृ.उ.३.४.१) इति श्रुतिं व्याख्याति - **आसीदेवेति** ।

**आसीदेव परेशानोऽस्याग्रेऽकार्षीन्न किञ्चन ।**
**आसीदव्याकृतं पूर्वं नामादिना विरच्यते ।। ३० ।।**

अस्य प्रपञ्चस्याग्रे इदमग्रे परमात्माऽऽसीदेव । तदानीं न किञ्चिदकार्षीदित्यर्थः । नन्वितरनिषेध एव किं न स्यात्तत्राह - **आसीदिति** ।

"तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" (बृ.उ.३.५.१) इत्युत्तरश्रुत्या प्रलयेऽविकृतप्रधानसत्त्वस्यानन्तरं नामादिना विक्रियमाणत्वस्य चोक्तत्वात् ।। ३० ।।

"ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात् तत् सर्वमभवत्" (बृ.उ.३.५.४) इति श्रुतिं व्याख्याति - **ब्रह्मासीदिति** ।

**ब्रह्मासीद्यत्पुरा सृष्टेस्तद्ब्रह्मास्मीत्यवेन्निजम् ।**
**तत्सर्वव्यापकत्वाद्धि सर्वं चाभवदीश्वरः ।। ३१ ।।**

'सर्वं समाप्नोषि ततोऽसि सर्वः' (गीता.११.४०) इति स्मृतेः ।। ३१ ।।

**(तद्यो यो देवानाम् इति श्रुत्यर्थः)**

"तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" (बृ.उ.३.५.४) इति श्रुतिं व्याख्याति - **य इति** ।

**यो देवानां तथर्षीणां मनुष्याणां तथा परम् ।**
**ब्रह्मावेत्सोऽभवद्ब्रह्म कीटभृङ्गनयाद् बुधः ।। ३२ ।।**

यथा भृङ्गं ध्यात्वा कीटो भृङ्गो भवति तथा ब्रह्मज्ञानान्निवृत्ताविद्य आविर्भूतपूर्णगुणो भवतीत्यर्थः ।। ३२ ।।

**(अहं मनुरभवं सूर्यश्चेति श्रुत्यर्थः)**

"तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" (ऋग्. ४.२६.१) इति श्रुतिं व्याख्याति -

**सूर्योऽहं मनुरेवाऽहं वामदेवो ब्रवीति यत् ।**
**तदन्तर्याम्यभिप्रायं तदभेदार्थकं परम् ।। ३३ ।।**

**नियम्यानां हि भेदेन तत्र भेदप्रसञ्जनम् ।**
**अन्तर्यामिणमाहाहं वामदेवेरितं वचः ।। ३४ ।।**

सूर्याद्यन्तर्याम्यभिन्न इत्यर्थः ।। ३३ ।। ३४ ।।

**(अन्तर्यामिणि भेदप्रसक्त्यभावात् तत्राभेदोपदेशवैयर्थ्यशङ्कापरिहारः)**

नन्वन्तर्यामिणि भेदप्रसक्त्यभावात्किमभेदोपदेशस्तत्राह - **सूर्याद्युत्तरसोरिति** ।

**सूर्याद्युत्तरसोर्न्याय्या सप्तम्यर्थे हि लक्षणा ।**
**वाच्यार्थाभेदविज्ञानमयोग्यत्वान्न सम्भवेत् ।। ३५ ।।**

तस्मादहंनामाभवत् तस्योपनिषदहमिति -
'अहंनामा हरिर्नित्यमहेयत्वात्प्रकीर्त्तितः' ।
इत्यादिश्रुतेः ।
'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः' । (मोक्षधर्मे)

इत्यादिस्मृतेश्चाहंशब्दोऽन्तर्यामिणि रूढः । "अहं तत्तेजोरश्मीन् नारायणं पुरुषं जातमग्रतः तमिममहं विजानाति" इति श्रुत्यन्तरे अहेयेऽहंशब्दप्रयोगाच्च । अन्यथाहं विजानामीति स्यात् । सूर्यादिप्रातिपदिकसुब्विभक्तेः सप्तम्यर्थे लक्षणा युक्ता हि स्फुटम् । एतदन्तर्यामिस्वरूपं पश्यन् वामदेवः प्रतिपेदे शिष्यान् प्रतिपादितवानित्यर्थः ।। ३५ ।।

**सविभक्तिकनाम्नां ते सर्वेषां लक्षणा मते ।**
**आधुनिकी जघन्या च साऽनुशासनिकी मम ।। ३६ ।।**

तत्र सविभक्तिकसर्वप्रातिपदिकानां लक्षणा जघन्याऽऽधुनिकी च । सुब्विभक्तिमात्रे सा सुपां सुलुक् इति सूत्रेण प्रथमैकवचनस्य सोः सर्वसुब्विभक्त्यर्थे लक्षणाया उक्तत्वादानुशासनिकी ।। ३६ ।।

यथाश्रुताभेदस्तु परमतेऽपि न सम्भवतीत्याह - **विशिष्टस्येति** ।

**विशिष्टस्य मिथ्यात्वं स्वीकुर्वता परेण हि ।**
**नाङ्गीकृतो भेदोऽत्र निर्विशेषात्मवादिना ।। ३७ ।।**

दण्डिपुरुषभाने पुरुषभानवद्विशिष्टब्रह्मभाने विशेष्यभानावश्यकत्वेन तन्मात्रबोधार्थलक्षणा व्यर्था ।। ३७ ।।

**विशिष्टग्रहणे तूच्चैर्विशेष्यग्रहणं भवेत् ।**
**लक्षणापि तव व्यर्थाऽज्ञातार्थस्य विवर्जनात् ।। ३८ ।।**

भेदाभावस्याभेदस्य वा विशेष्याधिकस्य लाक्षणिकबोधविषयत्वेऽद्वैत-हानेः ।। ३८ ।।

"य एवं वेदाहं ब्रह्मास्मि" इति स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति" (बृ.उ.३.५.४) इति श्रुतिं व्याख्याति -

**विशेष्याधिकधर्मस्य भेदाभावादिकस्य च ।**
**अङ्गीकारे भवेद् ध्वस्तमद्वैतं तावकं भृशम् ।। ३९ ।।**

**ब्रह्मास्तीति विजानाति यः स सर्वमिदं भवेत् ।**
**सर्वैकमत्यमाप्नोति जीवतत्त्वस्य बोधतः ।। ४० ।।**

यो वामदेववज्ज्ञातसर्वान्तर्यामीशापरोक्षोऽहं ब्रह्म पूर्णानन्दरूपोऽस्मी-त्येवं शुद्धं जीवस्वरूपं जानाति स इदं यत् मनुष्यगन्धर्वदेवर्षिब्रह्मलोकादौ प्रसिद्धं भोक्तृजातं तत्सर्वं भवति । तत्तदनुभाव्यानन्दान्प्राप्नोति । हस्तिपदे सर्वपदानामन्तर्भूतत्वं यथा तद्वत् । "सोऽश्नुते सर्वान् कामान्" (तै-त्त.२.१) इति श्रुतेः ।। ३९ ।। ४० ।।

**तस्य भूतिं न विघ्नन्ति देवास्तेषां पदं यतः ।**
**न स वाञ्छति पूर्णत्वात्प्रियः स्यादात्मवत्परम् ।। ४१ ।।**

आविर्भूतपूर्णानन्दत्वात् क्षुद्रानन्दहेतुदेवपदानाकाङ्क्षी सुराणामात्मवत्प्रियोऽतस्ते तदन्तरायं न कुर्वन्तीत्यर्थः ।। ४१ ।।

"यदि ह वा अप्यनेवंवित् महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव आत्मानमेव लोकमुपासीत । स य आत्मानमेव लोकमुपास्ते । न हास्य कर्म क्षीयत" (बृ.उ.३.५.९) इति श्रुतिं व्याख्याति -

**ब्रह्माज्ञेन कृतं कर्म सकामं क्षीयते ततः ।**
**ब्रह्मज्ञेन कृतं तन्न क्षीयते फलतः क्वचित् ।। ४२ ।।**

अज्ञेन कृतं सकामं कर्म नश्वरफलकं, ब्रह्मज्ञेन कृतं निष्कामं तदन्तः-करणशुद्धिद्वारा मोक्षरूपाक्षयफलकमित्यर्थः ।। ४२ ।।

**(यत्साक्षादपरोक्षात् इत्यादिश्रुत्यर्थः)**

"यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यां चरन्ति" (बृ.उ. ५.५.१) इति श्रुतिं व्याख्याति - **अव्यक्त इति** ।

**अव्यक्तोऽप्यपरोक्षत्वं कृपया याति विश्वभृत् ।**
**अन्तर्याम्यखिलानां यः शोकमोहादिवर्जितः ।। ४३ ।।**

अक्षैरिन्द्रियैः सह वर्त्तन्त इति साक्षा जीवाः तानातयति प्रेरयतीति साक्षात् । अव्यक्तस्वभावोऽपि कृपया विषयतया अपरोक्षज्ञानमतति प्राप्नोतीत्यपरोक्षात् । सर्वान्तर्यामी शोकाद्यस्पृष्टो यस्तमात्मानमन्तर्यामिणं विदित्वा वेदितुं सर्वैषणां विहाय संन्यासमनुतिष्ठन्तीत्यर्थः ।। ४३ ।।

(गार्गिब्राह्मणसारनिरूपणम्)

"यदिदं सर्वमप्स्वोतं च प्रोतं चेति कस्मिन् खलु गन्धर्वलोका ओताश्च प्रोताश्चेति अन्तरिक्षलोकेषु गार्गीति कस्मिन्नु अन्तरिक्षर्लोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन् खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु देवलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु ब्रह्मलोका ओताश्च प्रोताश्चेति स हो वाच गार्गि माऽतिप्राक्षीर्मा ते मूर्द्धा व्यपतद् अनतिप्रश्न्यां वै देवताम् अतिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नवी उपरराम" (बृ.उ.५.६.१) इति श्रुतिं व्याख्याति -

**अबादीनामशेषाणां लोकानामाश्रयः परम् ।**
**ब्रह्म नास्त्याश्रयस्तस्य तत्प्रश्नो हि निवारितः ।। ४४ ।।**

अबादीनां प्रजापतिलोकान्तानां चेतनाचेतनानामाश्रयो ब्रह्मलोकाः ज्ञानरूपं ब्रह्म । बहुवचनं बहुरूपाभिप्रायेण ।

'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' । (भ.गी.७.७)
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।।
ब्रह्मा मामाश्रितो राजन्नाहं कञ्चित् समाश्रये' ।
(महाभारत आश्वमेधिक)

इत्यादिस्मृतेः ।। ४४ ।।

(जीवोऽपि स्वप्रकाशः)

किञ्ज्योतिरयं पुरुष इति ज्ञानसाधने पृष्टे 'आदित्यचन्द्राग्निवाचां ज्ञान-साधनत्वे कथिते 'अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते

शान्तेऽग्नौ शान्तायां वाचि किञ्ज्योतिरेवायं पुरुष' इति पृष्टे 'आत्मैवास्य ज्योतिःर्भवतीति आत्मनैवायं ज्योतिषाऽऽस्त' (बृ.उ.६.३.६) इति स्वविषयकत्वरूपमात्मनः स्वप्रकाशत्वं कथितं सङ्गृह्णाति - **परमात्मैवेति** ।

**परमात्मैव जीवस्य सुप्त्यादौ ज्ञानसाधनम् ।**
**स्वप्रकाशोऽपि तद्योगात् गृह्णाति स्वसुखं तदा ।। ४५ ।।**

सुप्तौ नाडीस्थभगवन्मूर्त्तियोगाज्जीवः स्वानन्दमनुभवति । स्वप्रकाशत्वं तु मामहं जानामीत्यनुभवेन,

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति । (भ.गी.६.२०)

इत्याद्यागमेन च सिद्धम् । "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकौ अनुसञ्चरति । ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति" (बृ.उ. ६.३.७.) इत्युत्तरवाक्यमपीश्वरपरमेव । जीवस्य समानतया लोकद्वयसञ्चरणाभावात् । सञ्चरत्यादेरन्तर्भावितण्यर्थत्वकल्पनात् ।। ४५ ।।

**(असङ्गो ह्ययं पुरुष इति श्रुत्यर्थः)**

"स वा एष एतस्मिन्स्वप्रान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स यत् तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष" (बृ.उ.६.३.१५) इति श्रुतिं व्याख्याति - **रत्वेत्याद्या इति** ।

**रत्वेत्याद्या रवाः सर्वेऽन्तर्भावितणिजर्थकाः ।**
**असङ्गोऽत्र परं ब्रह्म निर्लेपत्वादिलक्षणम् ।। ४६ ।।**

'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' (गीता.४.१४) इति स्मृतेः ।। ४६ ।।

**पूर्वोत्तरानुसारेण गीर्नेहेति निषेधति ।**
**भेदं ब्रह्मगतं प्राप्तमन्तर्यामितया स्फुटम् ।। ४७ ।।**

'ईशानं भूतभव्यस्य' (बृ.उ.६.४.१५) 'यस्मिन्पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः' (बृ.उ.६.४.१७) इति पूर्वस्य "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय' (बृ.उ.६.४.२२) इत्युत्तरस्य च वाक्यसमूहस्यानुसाराद्भावप्रधाननिर्देशेन ब्रह्मगतमन्तर्यामित्वादिना प्रसक्तभेदं "नेह नानाऽस्ति किञ्चन" (बृ.उ.६.४.१९) इत्यनया निषिद्ध्यते ।। ४७ ।।

**(तमेतं वेदानुवचनेनेत्यादि श्रुत्यर्थः)**

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनाऽनाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति" (बृ.उ.६.४.२२) इति श्रुतिं व्याख्याति - **सर्वेशानमिति** ।

**सर्वेशानं तदामृश्य जिज्ञासा तस्य विधीयते ।**
**ज्ञेयः प्राप्यः स एव स्यात् मुक्तानां गुणसागरः ।। ४८ ।।**

'सर्वस्य वशी' (बृ.उ.५.४.२२) इत्यादिना प्रकृतं सर्वेश्वरं तच्छब्देन परामृश्य तद्विविदिषा विहिता । स एव मुमुक्षूणां ज्ञेयो मुक्तानां प्राप्यश्चेत्यर्थः ।। ४८ ।।

**(यो वै भूमेति श्रुत्यर्थः)**

"यो भूमा तत्सुखं नाल्पे सुखमस्ति । भूमैव सुखम् । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् । यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्त्यं स

भगवः कस्मिन् प्रतिष्ठितः इति स्वे महिम्नि" (छां.उ.७.२.३) इति श्रुतिं व्याख्याति - **भूमा इति** ।

**भूमा पूर्णगुणो विष्णुः पूर्णानन्दः सदैव हि ।**
**जीवोऽल्पस्तमपेक्ष्येशं स्वल्पानन्दः स्वभावतः ।। ४९ ।।**

जडे सुखाप्रसक्त्या जीवे सुखमात्रनिषेधासम्भवेन पूर्णसुखस्यैव हि जीवे निषेधः ।। ४९ ।।

**यस्मिन् दृष्टे श्रुते काङ्क्षाऽन्यद् द्रष्टुं श्रोतुमेव च ।**
**जायते न स भूमा हि पूर्णानन्दः सदा भवेत् ।। ५० ।।**

अलौकिकानन्तगुणे दृष्टे श्रुते चान्यविषयकदिदृक्षा न जायते । स भूमा विजिज्ञास्यः ।। ५० ।।

**यस्मिन्दृष्टे श्रुते काङ्क्षा स्यादन्यदीयदर्शने ।**
**तदल्पं पूर्णता तस्य विद्यते न सदा भृशम् ।। ५१ ।।**

तज्जीवस्वरूपमल्पं, न तस्य सदाविर्भूतपूर्णता । संसारदशायामविद्य-याऽऽवृतत्वात् ।। ५१ ।।

"स एवाधस्तात्स उपरिष्टात्स पश्चात्स परस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वमिति" एवम् "अहमेवाधस्तादहमेवेदं सर्वम्" अत्यन्तं एवमात्मैवाधस्तादित्याद्यात्मैवेदं सर्वम्" (छां.उ.७.२५.१) इत्यन्तं च वाक्यं व्याख्याति -

**आत्मैवेदं स एवेदमित्यादयो गिरः स्फुटम् ।**
**आहुः सार्वात्म्यमीशस्य सर्वव्याप्तृत्वलक्षणम् ।। ५२ ।।**

'सर्वं समाप्नोषि ततोऽसि सर्वः' । (भ.गी.११.४०)

इत्यनुसारात्सर्वव्यापकत्वरूपसार्वात्म्यमुक्तम् । तच्च सर्वस्वातन्त्र्यल-

क्षणं बहूनां न सम्भवतीति भूमाहङ्कारात्मनामभेदसिद्धिः । मुमुक्षुज्ञेयः भूमत्वाहङ्कारत्वात्मत्वगुणविशिष्टः परमात्मोपदिश्यते । न भूम्नः सकाशादहङ्कारादेः पृथगुपदेशो व्यर्थः ।। ५२ ।।

**आत्मैवोपरि चाधस्तात्सोऽधस्तादुपरीति च ।**
**उपर्यधो हि सम्बन्धोऽपरथा व्याहतो भवेत् ।। ५३ ।।**

यथाश्रुताभेदः सर्वेण जडादिना सहासम्भवी । सर्वं नास्ति किन्तु स एवेत्यर्थ उपर्यधःसम्बन्धोक्त्यनुपपत्तिरक्षरार्थास्पर्शश्चेत्यर्थः ।। ५३ ।।

"ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्" (ई.उ.) इति श्रुतिं व्याख्याति - **व्याप्तमिति** ।

**व्याप्तं सर्वं परेशेन यत्किञ्चिद् दृश्यते जगत् ।**
**ईशावास्यमितीत्येतद्वाक्यमाह स्फुटं किल ।। ५४ ।।**

ईशा परेशेन वास्यं पाल्यं व्याप्यमित्यर्थः ।। ५४ ।।

**(यस्तु सर्वाणि भूतानीति श्रुतिव्याख्यानम्)**

"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति सर्वभूतेषु चात्मानं ततो न विजुगुप्सते" (ई.उ.) इति श्रुतिं व्याख्याति - **सर्वभूतेष्विति** ।

**सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।**
**आधाराधेयभावेन भेदो भूतेशयोः स्फुटः ।। ५५ ।।**

यो हरितत्त्वज्ञानी सर्वभूतानि तदाधारकाणि तमन्तर्यामितया सर्वभूतेषु पश्यति ततो दर्शनान्न विजुगुप्सते न ग्लायति । सर्वस्येशाधीनत्वं पश्यतो रागद्वेषाद्यभावात् ग्लान्यभाव इत्यर्थः ।। ५५ ।।

"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः । तत्र को मोहः कः शोकः एकत्वमनुपश्यतः" (ई.उ.) इति वाक्यं व्याख्याति -

**ब्रह्मतत्त्वधियाऽविद्याशोकनिवर्त्तनं ततः ।**
**ज्ञानत्वानन्दताद्यैश्च जीवेशैक्यं हि पश्यतः ।। ५६ ।।**

यस्मिन् परमात्मनि सर्वाणि भूतानि परेशाधीनानि तदाधारकाणि विजानत आत्मैवाभूत् । आत्मयाथात्म्यज्ञानविरोध्यज्ञानमात्माविद्यानाभूदित्यर्थः । तत्रात्मतत्त्वे को मोहः? यथार्थात्मतत्त्वधीप्रतिबन्धकः तद्विरोधितत्त्वधियो जातत्वात्। अविद्याहेतुकदेहगेहादिष्वहं ममेति धियोऽभावात् पुत्रवित्तादिनाशहेतुकशोको न भवति । ज्ञानानन्दत्वादिना जीवानां जीवेशयोश्चैकत्वमनुपश्यतः ।। ५६ ।।

"योऽसावसौ पुरुषः सोऽहमस्मि वायुः" (ई.उ.) इति श्रुतिं व्याख्याति - **पुरुष इति** ।

**पुरुषो यो ह्यसावीशः सोऽन्तर्यामी मयि प्रभुः ।**
**प्रथमाया भवेद् वृत्तिः सप्तम्यर्थे हि लक्षणा ।। ५७ ।।**

अन्यथा 'वायुरनिलममृतमथेदं भस्मान्तं शरीरम्' (ई.उ.) इत्युत्तरवाक्यविरोधः स्यात् । न हि शरीरादेरपि जीवैक्यम् ।। ५७ ।।

**(ब्रह्मविदाप्नोति परमिति वाक्यखण्डव्याख्यानम्)**

"ब्रह्मविदाप्नोति परम् । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैत्ति.उ.) इति वाक्यं सङ्गृह्णाति - **सत्यमिति** ।

**सत्यं ज्ञानमनन्तं यो ब्रह्म जानाति बुद्धिमान् ।**
**गुहायां हृदये कामान् प्राप्नोति सोऽखिलान् नरः ।। ५८ ।।**

ब्रह्मणा हेतुना सह युगपत् सर्वान् कामान् स्वयोग्याशेषानन्दानश्नुत इत्यर्थः । मायिनां सत्यत्वादिविशिष्टस्य मृषाभूतस्य ज्ञानं मोक्षाहेतुरिति वाक्यमसङ्गतम् । न च लक्षणया शुद्धब्रह्मज्ञानं मोचकमिति वाच्यम् ।

सत्यादिपदैर्लक्षणया ह्यसत्यादिकमेव बोधनीयं न च तज्ज्ञानं मोक्षहेतुः । न च सत्यत्वादिधर्मं त्यक्त्वा सच्छक्तिमात्रे लक्षणा । विशेष्यमात्रस्य शाक्तबोधेनैव विषयीकृतत्वेन लक्षणावैयर्थ्यात् ।। ५८ ।।

**(जगत्कर्तृत्वादिगुणविशिष्टं शुद्धमेव ब्रह्म मुमुक्षुज्ञेयम्)**

"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुर्वायोरग्निर-ग्नेरापोऽद्भ्यः पृथिवी" (तैत्तिरीय) इत्यादि वाक्यं सङ्गृह्णाति - **शुद्धमिति** ।

**शुद्धं ब्रह्म तदामृश्य ह्याकाशादेस्ततो जनिम् ।**
**वदन्ती जगतां कर्त्तुर्ज्ञानं मोचकमाह हि ।। ५९ ।।**

सत्यादिवाक्यबोधितं शुद्धं ब्रह्म तत्पदेन परामृश्य जगत्कर्तृत्वादिवि-शिष्टमेव शुद्धं मुमुक्षुज्ञेयमिति प्रतिपादितमित्यर्थः ।। ५९ ।।

"अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् -
शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः ।

'यस्मिन्निदं सर्वम्' ।

'यस्मिन् देवा अधि विश्वे निषेदुः,
येनावृतं खञ्च दिवं महीं च ।
येनादित्यस्तपति तेजसा'
यमन्तः समुद्रे कवयो वयन्ति । यदक्षरे परमे प्रजाः ।
यतः प्रसूता जगतः प्रसूतीः तोयेन जीवान् विससर्ज भूम्याम् ।
यदोषधीभिः पुरुषान् पशूंश्च विवेश भूतानि चराचराणि ।।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ।
तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् ।
य एवं विदुरमृतास्ते भवन्ति" । (महानारायण)
इति श्रुतिं सङ्गृह्णाति -

**सर्वाधारोऽधिशायी यो जगतां जनको हरिः ।**
**अखिलव्यापिनस्तस्य ज्ञानं मोक्षस्य कारणम् ।। ६० ।।**

समुद्रस्य भुवनमध्ये रूपविशेषेण तिष्ठति । निरधिकमहान् शुक्रेण ज्योतिःस्वरूपेणान्तर्यामितया ज्योतींषि सूर्यादीननुप्रविष्टः । प्रजापतिः ब्रह्मा यस्य गर्भे चरति, यस्मिन्निदं सर्वम् आब्रह्म स्तम्बपर्यन्तं तिष्ठति, ये कवयः क्रान्तदर्शिनः समुद्रेऽवयन्ति जानन्ति, यतो जगज्ज्ञातम्, यो देह-द्वारा जीवान् ससर्ज, एकं मूलरूपेणावतारादिनाऽनन्तरूपं तदेव ब्रह्मपद-वाच्यं, य एवं पश्यन्ति मुक्तास्ते भवन्तीत्यर्थः ।। ६० ।।

"अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ।
(महानारायण)

सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्तजिह्वाः
सप्त इमे लोका"
(महानारायण उ.)

इत्यादिकां महत्वादिगुणविशिष्टस्य प्राणादिविश्वजनकत्वादिविशिष्टस्य ब्रह्मणो ज्ञानं मोचकं वदन्तीं श्रुतिं सङ्गृह्णाति - **महत्त्वादिति ।**

**महत्त्वादिगुणाम्भोधेर्ज्ञानं बन्धविमोचकम् ।**
**प्राणादिविश्वकर्त्तुश्च तथेत्याह श्रुतिः स्फुटम् ।। ६१ ।।**

अक्रतुं निर्लेपं तं पश्यत्यथ वीतशोको मुक्तो भवति ।। ६१ ।।

"सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ।।
विश्वतः परमां नित्यं विश्वं नारायणं हरिम् ।
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ।।

पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ।
नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।।
नारायण परो ज्योतिरात्मा नारायणः परः ।
यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽथ वा ।।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । (महानारायण)
इति श्रुतिं सङ्गृह्णाति - **सविशेषमिति** ।

**सविशेषं परं ब्रह्म जगद्व्यापि सविग्रहम् ।**
**मुमूक्षणां महाज्ञेयं श्रुतिराह जनार्दनम् ।। ६२ ।।**

पदं मुक्तप्राप्यम् । विश्वस्य पतिं पालकम् । आत्मनां जीवानामीश्वरं नियन्तारम् । शिवं सुखरूपम् । मुमुक्षूणां महाज्ञेयं ज्योतिः स्वप्रकाशरूपम् । आत्मा आततो व्यापकः । ब्रह्म गुणपूर्णम् । अन्तः अन्तर्यामितया, बहिर्व्यापकतया । अतस्तद्व्याप्यत्वेनापि विश्वस्य सत्यत्वम् ।। ६२।।

"अन्यत्र धर्मादन्यत्राधर्मास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ।
सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।

यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि ।। ओमित्येतत् । 'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।

एतद्ध्येवाऽक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्' (काठ.२.१६) इति श्रुतिं सङ्गृह्णाति - **सर्वेति** ।

**सर्वशब्दाभिधेयस्य सत्यानन्तगुणाम्बुधेः ।**
**ज्ञानं हेतुः पुमर्थानां चतुर्णामाह हि श्रुतिः ।। ६३ ।।**

धर्मादेरन्यत्र कृतात्कार्यादकृतादनादेः प्रकृतेर्जीवाच्च भूतादिकालाच्चान्यत्र परमात्मनि यत्तत्त्वं पश्यसि तद्वदेति तत्त्वे पृष्टे, सर्वे वेदाः सर्वाणि

तपांसि वचांसि च यत् सर्वशब्दप्रवृत्तिनिमित्तैरनन्तैर्विशिष्टं वदन्ति, यदीयप्राप्तिमिच्छन्तो ब्रह्मचर्यादिकं कुर्वन्ति तत्त्वं मुक्तेः पद्यते प्राप्यत इति पदं तुभ्यं सङ्ग्रहेण व्याख्यास्यामि । अनन्तगुणाब्धेः साकल्येन व्याख्यानासम्भवात् । एतद् एतदेव प्रणववाच्यं ब्रह्मैतज्ज्ञानादेव पुमर्थचतुष्टयावाप्तिरित्यर्थः ।। ६३ ।।

**(यमेवैष वृणुते इति श्रुत्यर्थः)**

"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन

यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" (कठ.उ.२.२३) इति श्रुतिं सङ्गृह्णाति - **श्रुतादिनेति** ।

**श्रुतादिना [1]न गम्योऽयं परमात्मा कदाचन ।**
**प्रसादादेव तस्यैव लभ्यः स्यात्करुणानिधिः ।। ६४ ।।**

।। ६४ ।।

**(ऋतं पिबन्ताविति श्रुत्यर्थः)**

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ।

छायातपौ ब्रह्मविदो वदन्ति" (काठक.७.७) इति श्रुतिं व्याख्याति - **रूपभेदेनेति** ।

**रूपभेदेन सङ्कोचेशे द्वित्वादिः सूपपद्यते ।**
**भक्तार्पितस्य भोक्तृत्वं प्रसिद्धं जगदीश्वरे ।। ६५ ।।**

ऋतपानकर्तृत्वादिविशिष्टपरेश एवात्रोक्तः । एतत्सर्वं परे आत्मनि प्रविष्टमिति प्रस्तुत्य "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता" (षट्.प्रश्नो.४.९) इत्यादिश्रुत्या -

---

१. न इति क कोशे नास्ति ।

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च -
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । (गीता.२५.२९)

इत्यादिस्मृत्या च भोक्तृत्वोक्तेः । न 'चानश्नन्नन्य' (आथर्वण, ३.१) इति विरोधः । तस्य पुण्यमेवामुं गच्छतीति सावधारणश्रुत्यनुसारात्पापफलाभोक्तृत्वपरत्वात् । न च द्वित्वसङ्ख्यानुपपत्तिः । अदितिः पाशान् प्रयुनक्तीत्यत्रैकपाशेऽवयवाभिप्रायेण बहुवचनं यथा तथा रामकृष्णावित्यादाविव द्विवचनोपपत्तेः । न च 'द्वा सुपर्णा सयुजा' (आथर्वण, ३.१) इत्यादाविव सङ्ख्यया भेदः स्यात् । द्वा सुपर्णा इत्यादौ हि प्राक् सङ्ख्यानिश्चयाभावात्तया भेदसिद्धिः । प्रकृते 'यस्य ब्रह्म च क्षत्रं चोभे भवतः ओदनः । मृत्युर्यस्योपसेचनम्' (काठक.६.११) इति पूर्वं 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारम्' इत्युत्तरत्र चैकत्वनिश्चयान्न सङ्ख्या भेदिका । अत एवैकादश प्रयाजान् यजतीत्यादावावृत्त्यैवैकादशत्वसम्पादनम् । प्रयाजानां पञ्चत्वस्य प्राक् निश्चयात् । गुहाप्रविष्टत्वं तु 'यो वेद निहितं गुहायाम्' इत्याद्युक्तमन्तर्यामिणः सूपपन्नम् । साधून् प्रति सुखहेतुत्वात् छायात्वं खलान् प्रति दुःखहेतुत्वादातपत्वं च प्रतियोगिभेदेनोपपन्नं विस्तृतं सूत्रवृत्तौ ।। ६५ ।।

ननु तर्हि जीवस्याभोक्तृत्वं स्यादिति मन्दाशङ्कां निरस्यति - **इन्द्रियादीति** ।

**इन्द्रियादियुतो जीवो भुङ्क्ते कर्मफलानि वै ।**
**संसारे मुक्तिगो नैवं स्वानुभूतुष्टिरेव यत् ।। ६६ ।।**

'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । (कठ.७.४)

इति श्रुतेः । मुक्तौ तु स्वसुखानुभवेन तुष्टः ।। ६६ ।।

(यस्तु विज्ञानवान् भवतीति श्रुतिव्याख्यानम्)

मुक्तानां विष्णुप्राप्तिं बोधयन्तीं श्रुतिं सङ्गृह्णाति - **सारथिरिति** ।

**सारथिर्यस्य विज्ञानं मनः प्रग्रह एव च ।**
**सोऽध्वनः पारमभ्येति विष्णोस्तत्परमं पदम् ।। ६७ ।।**

'यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः स तु तत्पदमाप्नोति यस्माद् भूयो न जायते । विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (कठ.७.९) इति । पद्यते मुक्तैः प्राप्यते इति पदं विष्णोः स्वरूपं लोको वा ।। ६७ ।।

(इन्द्रियेभ्यः परा ह्यर्था इति श्रुतिव्याख्यानम्)

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ।।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ।। (काठक.७.१०)

इति श्रुतिं सङ्गृह्णाति - **पुरुष इति** ।

**पुरुषो हरिरेवोक्तो ह्यव्यक्तात्प्रकृतेः परः ।**
**सर्वभूतेषु गूढत्वं तस्यैव सूपपद्यते ।। ६८ ।।**

इन्द्रियसाधकत्वादर्थाः शब्दादयस्ततः पराः । तेभ्यो मनः परं सूक्ष्मत्वात् । सङ्कल्पादिरूपतोऽध्यवसायात्मिका बुद्धिः । कारणत्वान्महानात्मा महत्तत्वं तद्धेतुत्वात्ततः परमव्यक्तं प्रधानम् । ततः परस्तन्नियामकः पुरुषो हरिः । "एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते" दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" (काठक.१.७.१२) इत्युक्तम् । अन्तर्यामितया सर्वगूढत्वमेकाग्रबुद्धिदृश्यत्वं तस्यैव सूपपन्नम् ।। ६८ ।।

तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ।
अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ।।
वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ।।
सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ।।
एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनु पश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ।।
नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनु पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ।।
(कठ.उ.२.२.८-१२)

इति श्रुतिं सङ्गृह्णाति - **अन्तर्यामित्वेति** ।

**अन्तर्यामित्वविज्ञानाल्लोकाश्रयत्वगोचरात् ।**
**चेतनोत्तमताज्ञानान्मुक्तिमाह श्रुतिः स्फुटम् ।। ६९ ।।**

अग्निवाय्वादिर्यथा भुवनं तत्स्थं प्राणिजातं प्रविष्टो बहिश्चास्ति तथैक ईशोऽन्तर्यामितया सर्वप्राणिषु प्रविष्टो व्यापकतया बहिश्चेत्येतत्स्वरूपस्याचिन्त्यशक्तेर्ज्ञानं तथा बहुचेतननियामकत्वतत्कामपूरकत्वादिविशिष्टस्य ज्ञानं मुक्तिहेतुरित्यर्थः ।। ६९ ।।

**(तमेव भान्तमनुभाति इति श्रुत्यर्थः)**

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति" (कठ.उ. २.३.३) इति श्रुतिं सङ्गृह्णाति - **सूर्यादीनामिति** ।

**सूर्यादीनां प्रकाशस्यात्रेशाधीनत्वमुच्यते ।**
**सर्वमितिपदं ब्रूते सूर्यादीन् प्रस्तुतान् स्फुटम् ।। ७० ।।**

सर्वमित्यनेन प्राक् प्रस्तुतं सूर्यादिकमेव गृह्यते । [1]हारियोजनं सर्वेऽभिलिप्सन्त इत्यत्र यथा प्रकृता ऋत्विज एव गृह्यन्ते नाऽन्ये तद्वत् ।। ७० ।।

नन्वधिष्ठानीभूतब्रह्मभानेनाध्यस्तं सर्वं भातीत्यर्थः किं न स्यात् तत्राह - **भेद इति** ।

**भेदेऽनुशब्दः स्यात्सार्थकः स न विद्यते तव ।**
**शता भानाश्रये शक्तः षष्ठी तस्येति ते वृथा ।। ७१ ।।**

चैत्रं गच्छन्तं मैत्रोऽनुगच्छतीत्यादिषु क्रियाभेदे सत्येवानुशब्दः प्रयुज्यते । न हि त्वन्मते ब्रह्मभानातिरिक्तभानमस्ति । शता शतृप्रत्ययोऽपि भानाश्रयवाचको भानमात्रे ब्रह्मण्यसङ्गतः । तस्येति षष्ठ्यपि ते वृथा ।। ७१।।

**(अन्यदेव तद्विदिताद् इति श्रुत्यर्थः)**

"अन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे" (तलवकार, २.१) इति श्रुतिं व्याख्याति - **अन्यदिति** ।

**अन्यत्साकल्यतो ज्ञातादज्ञातात्तुच्छतः परम् ।**
**अन्यथा शुश्रुमेत्यादिविरोधो दुस्तरो भवेत् ।। ७२ ।।**

साकल्येन प्रमितात्तुच्छाच्चान्यत् । अन्यथा "पूर्वेषां सकाशात् इति शुश्रुम ये पूर्वे तद्व्याचक्षिरे" इति विरोधः स्यात् ।। ७२ ।।

**(यद्वाचानभ्युदितमित्यादि श्रुतिव्याख्यानम्)**

"यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमु-

---

१, अस्य वाक्यस्यार्थो न ज्ञायते ।

पासते । यन्मनसा न मनुते येनाहुर्मनो मतम् । यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति । यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् । यत्प्राणेन न प्राणिति येन प्राणः प्रणीयत" (तलवकार) इति श्रुतिं व्याख्याति - **यच्छ्रुत्वेति** ।

**यच्छ्रुत्वा मनसा मूर्तिः कल्प्यते योगिभिः परम् ।**
**तदेव ब्रह्म विद्धि त्वं नेदं यन्मनसा कृतम् ।। ७३ ।।**

**अतर्यामीन्द्रियाणां यः कथं तैर्गृह्यतां हि सः ।**
**अव्यक्तोऽपि स्वयं चित्ते कृपयाऽऽविर्भवेत् क्वचित् ।। ७४ ।।**

**गोचरः श्रवणादीनां कृपया भवतीश्वरः ।**
**श्रवणादौ हि जीवस्य स्वातन्त्र्यं वार्यतेऽनया ।। ७५ ।।**

यच्छ्रुत्वा मनोमयी मूर्त्तिः कल्प्यते तदेव ब्रह्म त्वं विद्धि । मनोमयी मूर्त्तिर्ब्रह्म न भवतीत्यर्थः । अन्यथा 'यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्' (तलवकार, ३.१) इति ब्रह्मणः सूक्ष्मत्वेन वेदनोक्तिर्विरुद्ध्येत ।। ७३ ।। ७४ ।। ७५ ।।

**(मन्ये विदितमित्यादिश्रुत्यर्थः)**

"मन्ये विदितं नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद्वेद तद् वेद नो न वेदेति वेद च ।
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ।।" (तलवकार, ३.२,३)

इति श्रुतिं व्याख्याति - **इयत्तयेति** ।

**इयत्तया विजानाति यस्तस्य विदितं न हि ।**
**नेयत्तया विजानाति विदितं तस्य योगिनः ।। ७६ ।।**

नाहं मन्ये सुवेदेति साकल्यादिना, नो न वेदेति मन्ये, किन्तु साधन-

सम्पन्नस्तत्प्रसादेन । यः कश्चन वेद च । येन साकल्येन ब्रह्म ज्ञातं तेन न ज्ञातमतत्त्वज्ञानित्वात् । येन तथा न ज्ञातं किन्तु स्वयोग्यगुणविशिष्टमेव ज्ञातं तेन ज्ञातं सम्यग्ज्ञानित्वात् । 'भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति' (तलवकार, ३.५) इत्युत्तरवाक्यविरोधः स्यात् ।। ७६ ।।

"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" (आथर्वण, १.१.३) इति शौनकेन पृष्टे "द्वे विद्ये वेदितव्ये यद्वेदविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणम्" (आथर्वण, १.१.४) इत्यादिकामपरामुक्त्वा "अथ परा यया तदक्षरमधिगम्यत" (आथर्वण, १.१.६) इति ऋगादिरूपाया एवाक्षराधिगितिकरणत्वेन परविद्यात्वमुत्कृष्टविषयकत्वात् । अतस्तस्याः परविद्यात्वोपपादनाय विषयस्य परमत्वं निरूपयति -

"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः।

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्"
(आथर्वण, १.१.८)

इतीमां श्रुतिं सङ्गृह्णाति - **साकल्येनेति** ।

**साकल्येन त्वदृश्यत्वमक्षरस्योपपद्यते ।**
**अन्यथा परिपश्यन्तीति व्याहतं भवेत्स्फुटम् ।। ७७ ।।**

अक्षरस्य सर्वथाज्ञेयत्वे 'कस्मिन् भगवो विज्ञाते' (आथर्वण, १.१.३)

इति प्रश्नस्य 'परिपश्यन्ति धीराः' (आथर्वण, १.१.७) इत्युत्तरस्य चासङ्गतिः स्यात् ।। ७७ ।।

भगवतोऽङ्घ्रिकञ्जस्य श्रीगोपालस्य रेणवः ।
क्रियासुर्वैभवं वाचामघराशेश्च शोधनम् ।। १ ।।

भुक्त्वा श्यामाकमुष्टिं विपदमपनयद्दीनबन्धुर्द्विजाते -
र्दत्वा भूतीः पराः स्वाः धृतकर इति मा देहि मां पद्मया यः ।
द्रौपद्याः शाकलेशात् त्रिभुवनमपुषद्यज्वनां दुःप्रसाद्यो
वाक्यानां सङ्ग्रहान्मे भवतु मुररिपुः कारितात् स्वेन तुष्टः ।। २ ।।

श्रीगोविन्दविहारभूषितभुवो वृन्दावनात्प्राग्दिशि ।
क्रोशान्तात् त्रियुगे पुरे मुनिभरद्वाजीयवंशोद्भवाः ।।
श्रीसन्नाहमुचो वसन्ति विबुधो वर्णी ह्यभूत्तत्कुले ।
सम्पूर्णः श्रुतिसङ्ग्रहो विरचितोऽयं तेन कृष्णेच्छया ।। ३ ।।

*।। इति श्रुतिसिद्धान्तसङ्ग्रहे वनमालिमिश्ररचिते*

*सप्तमोऽध्यायः ।।*

## ।। समाप्तोऽयं ग्रन्थः ।।

## WORKS READY FOR PUBLICATION :

**1. Bhedataraṅgiṇi** **Editor : Prof. K. Hayavadana Puranik**
(Authored by Koneri Ranganātha)

**2. Advaita Sūtrārtha Paddhatiḥ** **Editor : Prof. D. Prahlada Char**
(A commentary on Brahmasūtra according to Advaita system)

**3. Gītābhāṣyam (3-6 chapters)** **Editor : Prof. P. Venkatesha Bayari**
of Śri Madhvācārya,
(With Prameyadīpikā of Śri Jayatīrtha, Bhāvadīpikā of Śri Śrinivāsatīrtha & Bhāvaratnakośa of Śri Sumatīndratīrtha)

**4. Pramāṇa Paddhatiḥ** **Editor : Prof. A. Haridasa Bhat**
Of Śri Jayatīrtha
(With Bhāvavivaraṇa of Śri Vedeśatīrtha & Bhāvadīpa of Śri Rāghavendratīrtha)

**5. Smṛti Maṇikya Saṅgrahaḥ** **Editor : Dr. A. V. Nagasampige**
(Commenatry of Sadācārasmṛti in Sanskrit verses by Kāgalūru Vāsudevācārya)

**6. Bṛhadāraṇyakopaniṣad** **Editors : Dr. A. V. Nagasampige**
**Dr. H. Satyanarayanacharya**
**Pt. Raghuttama V. Nagasampige**
(With Śri Madhva Bhāṣya, Khaṅdārtha of Śri Vyāsatīrtha, Śri Bhāvabodha's gloss & Śri Rāghavendratīrtha's Khaṅdārtha)

**7. Chāndogyopaniṣad** **Editors : Pt. Ranganatha Katti**
**Pt. Shankaranarayana Adiga**
(With Śri Madhva Bhāṣya, glosses of Śri Vedeśatīrtha & Śri Rāghavendra tīrtha)

**8. Aitareyopaniṣad** **Editor : P.V. Upadhyaya**
(With Śri Madhva Bhāṣya, glosses of Tāmraparṇīya & Bhagavantarāya)